सर्वे दोषाः प्रणश्यन्ति सत्त्वस्थश्चैव जायते ॥
जलबिन्दुकुशाग्रेण मासे मासे च यः पिबेत् ।
संवत्सरशतं साग्रं प्राणायामैकतत्समम् ॥
प्राणायामविशुद्धात्मा यस्मात् पश्यति तत्परम् ।
तस्मात्किञ्चित्परं नास्ति प्राणायामादिति श्रुतिः ॥

तदक्षपितकलुषक्षपणार्थं जपः कर्तव्यः । तृतीयचतुर्थयोरन्यतरस्मिन् ब्रह्मणि प्रयत्ननिरुद्धं चित्तं सम्पूर्णाक्षरानुबोधेन तदर्थानुबोधेन वा पुनः पुनः सञ्चारयेदिति । एवं च प्रायश्चित्तान्तरमुत्सूत्रत्वान्न कर्तव्यमिति । ननु च त्रिकस्य कलुषनिवृत्त्यर्थमेवाभिधानं व्यभिचारान्तरेषु पुनः किं प्रायश्चित्तम्?। न चैतद्वाच्यं यतेरप्रमत्तस्य सर्वदैव संयतत्वादसम्भवी व्यभिचार इति, कामादिव्यभिचारेण समानत्वात्रिकस्याप्यनारम्भप्रसङ्गो वा । किं चाधर्मसामर्थ्याद्विदुषोऽपि व्यभिचारसम्भवात् । उक्तं च 'ह्रियते बुध्यमानोऽपि' इत्यादि । हिंसायाश्चावश्यंभावित्वात् ।

उक्तं हि । " अह्ना रात्र्या च याञ्जन्तून्हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् " ॥

प्रतिदिनमित्यर्थः । अत्रैके सर्वव्यभिचारेषु त्रिकमेव कर्तव्यमिति मन्यन्ते । वयं तु पश्यामः कलुषनिवृत्त्यर्थमेव त्रिकं कर्तव्यम् । भाष्यस्यापि तथैव श्रुतत्वान्नादृष्टार्थमदृष्टशुद्धेश्चानिश्चयात् त्रिकानुपरमप्रसङ्गः स्यात्, तस्मात्कलुषनिवृत्तौ पूर्वकृता धर्मक्षपणवद्व्यभिचारकृताधर्मक्षपणार्थमपि विध्याचरणमेव कर्तव्यम् । तथा च सूत्रं ' भूयस्तपश्चरेत् ' इति । मनुरप्याह—

यत् किञ्चिदेनः कुर्वन्ति वाङ्मनोमूर्तिभिर्जनाः ।
तत्सर्वं निर्नुदन्त्याशु तपसैव तपोधनाः ॥
महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात् ततः ॥

तथा श्रीमद्भाष्यकृताऽपि ज्ञापकमुक्तम्—

तपोभिरार्या निनुदन्ति पापं ध्यानोपयोगात् क्षपयन्ति पुण्यम् ।
ते निर्मलास्तत्त्वविदो विशुद्धा गच्छन्ति मोक्षं ह्युभयोरभावात् ॥

न चायं नियमः पुण्यक्षय एव ध्यानात्, किन्तु पापक्षयोऽपि । यतः तत्रैव ज्ञापकान्तरमुक्तम्—

सर्वं दहति ध्यानेन पुण्यपापक्रियाश्रयम् ।
पुण्यपापफले दग्धे स्वामी तस्य न विद्यते ॥ इति ।

एवं तर्ह्यनर्थकं विध्यनुष्ठानमिति चेन्नानेन विधिना रुद्रसमीपं गत्वेति प्रवचनाद्विध्यनुष्ठानविकलस्य योगानुष्ठानसामर्थ्याभावात् ॥

तथा चान्यात्राप्युक्तम्—

धर्मः प्रयत्नतः कार्यो योगिना तु विशेषतः ।
नास्ति धर्मादृते योग इति योगविदो विदुः इति ॥

तस्मादुपस्पर्शनादिभिः प्रसन्नं चित्तं कृत्वा सर्वस्याधर्मस्य क्षपणार्थं विधियोगानुष्ठानमेवात्यंतादिभियोगेन कर्तव्यं न प्रायश्चित्तान्तरमिति । तथा दशाहिंसादयो यमाश्चर्याऽनुग्राहका यदा तदा विध्यन्तर्भूता, यदा तु योगक्रियाऽनुग्राहकास्तदा योगान्तर्भूता इति । तत्र वाक्कायमनोभिः परदुःखानुत्पादनमहिंसा, इन्द्रियसंयमो ब्रह्मचर्यं, धर्मसाधनानङ्गवचनप्रतिषेधः सत्यं, वर्णाश्रमिभिः सह दृष्टार्थसङ्गतिप्रतिषेधोऽसंव्यवहारः, धर्मसाधनाङ्गादभ्यधिकस्य न्यायतोऽप्यस्वीकरणमन्यायतस्तु धर्मसाधनाङ्गस्याप्यस्वीकरणं चास्तेयं, परैरपकृतस्याप्यम्लानचित्तत्वमक्रोधः, वाक्कायमनोभिर्गुरौ हितभावेनैव वर्तनं गुरुशुश्रूषा, कायान्तःकरणात्मशुद्धिः शौचं, स्ववृत्त्यैवोपार्जितान्नस्य विधियोगानुष्ठानाविरोधेनाभ्यवहरणमाहारलाघवम् । अष्टौ ग्रासा मुनेरिति केचित्, तन्नेष्टं, विधियोगानुष्ठानविरोधप्रसङ्गात् । सव्यञ्जनाशनोदकाभ्यां कोष्ठस्य भागत्रयं पूरयित्वा चतुर्थं भागं वायोः संचरणार्थमवशेषयेदित्यन्ये । तदिष्टमेवाविरोधात् । अत्र च पञ्चविधभैक्षाभिधायकं वाक्यं ‘ चरेन्माधुकरीम् ’ इत्याद्यविरोधेन व्याख्येयम् । यथाविहितविधियोगानुष्ठाने सततमेवोद्यमोऽप्रमादः । अयं च प्रधानभूतो यमः । तथा चोक्तम्—

यतिधर्मस्य सद्भावः श्रूयतां गुणदोषतः ।
अप्रमादात्परा सिद्धिः प्रमादान्नरकं ध्रुवम् ॥ इति ।

वासोऽपि ज्ञानोत्पादनद्वारेण चर्यानुग्राहकत्वाद्गुणविधिरेवेति । चित्तद्वारेणेश्वरसम्बन्धः पुरुषस्य योगः । स द्विविधः, क्रियालक्षणः क्रियोपरमलक्षणश्चेति । तत्र क्रियालक्षणो जपयन्त्रणधारणध्यानस्मरणात्मक इति । वक्ष्यामः । क्रियोपरमलक्षणोऽप्यतिगत्यादिशब्दवाच्य इति । शास्त्रान्तरोक्तपदार्थेभ्योऽमीषामतिशयाभिधानं विशेषः । तथाहि शास्त्रान्तरे दुःखनिवृत्तिरेव दुःखान्तः, इह

तु परमैश्वर्यप्राप्तिश्च । तथाऽन्यत्राभूत्वा भावि कार्यमिह तु नित्यं पश्वादि । तथा-ऽन्यत्रास्वतन्त्रं प्रधानादि कारणमिह तु स्वतन्त्रो भगवानेव । तथान्यत्र कैवल्या-भ्युदयफलो योगः, इह तु परमदुःखान्तफलः । तथान्यत्रावर्त्तकः स्वर्गादिफलो विधिरिह त्वनावर्तको रुद्रसमीपादिफल इति । पदार्थानां समाप्तिरुपसंहार-स्तत्र दुःखान्तकार्यकारणविधीनामिति शब्देन समाप्तिरुक्ता । योगस्य तु त्वा-शब्देनेति । समाप्तानां निःशेषीकरणार्थं प्रासङ्गिकसंशयनिवृत्त्यर्थं च धर्मान्त-राभिधानं निगमनम् । प्रतिज्ञातार्थेन सहैकवाक्यत्वख्यापनार्थमित्यन्ये । तदेवं विधियोगयोः कार्यान्तर्भावेऽपि अतिप्रयोजनवशात् पृथगभिधानं कृत्वा पञ्चा-नामेव समासादय उक्ता इत्यतः पञ्चैव पदार्था उच्यन्ते । अन्ये तु पदार्थभेद-मन्यथा वर्णयन्ति । तत्त्वं गुणो भाव इति । तत्र यदनाश्रितं तत्तत्त्वम् । तच्च विंशतिभेदम् । पञ्च पृथिव्यादीनि त्रयोदशेन्द्रियाणि पशुः कारणं चेति । तत्त्ववृत्तयः भावाश्रया गुणास्तत्र पृथिव्यादिषु यथासम्भवं रूपरसगन्धस्पर्श-शब्दाः पञ्चैव वर्तन्ते । इन्द्रियतत्त्वानि तु निर्गुणानि । पशुषु सप्त गुणा वर्तन्ते पशुत्वधर्माधर्मचित्तविद्याप्रयत्नेच्छालक्षणाः । सुखादीनां तु तद्विकार-त्वात्तदन्तर्भाव एव, मृद्विकारवत् । कारणे त्रयो गुणा कामार्थित्वविप्र-त्वाख्या इति धर्मिभ्योऽन्यानन्यत्वेनानिर्वचनीयाः । सत्त्वगुणानां धर्मा भावा इत्युच्यन्ते । तद्विचारश्च सत्कार्यविचारे कृत इति नेह क्रियते । तदेवं कारणादि-निश्चयज्ञानं प्रथमो लाभ इति । द्वितीयं लाभमाह तपः इति । भस्मस्नानादिवि-धिजनितो धर्मस्तप इत्युच्यते । तस्योत्पादो रक्षणादिलिङ्गादपि निश्चीयते । अधर्मतस्करेण सन्मार्गादपह्रियमाणः साधकः पुरपालस्थानीयेन धर्मेण रक्ष्यते । अवस्थानादवस्थान्तरगमनं गतिः । विहितानुष्ठान एव सन्तोषः प्रीतिः । लाभस-म्बन्धः प्राप्तिः । यद्बलेन विधियोगाभिनिविष्टस्य चित्तं रम्भादीनां गीतवाद्या-दिभिरपि क्षोभयितुं न शक्यते तन्माहात्म्यं धर्मशक्तिरित्यर्थः । अतिगतिसा-युज्यस्थितिशब्दा निष्ठायोगपर्यायाः । यस्मिन् सति पदार्थाः साधकस्याध्यक्षो-पलब्धियोग्या भवन्ति , स प्रकाशः द्विविधः परापरभेदात् । तत्र येन विधियो-गसाधनानि सम्यग्विवेचयति ध्येयतत्त्वे ब्रह्मणि च स्वं चित्तं समाहितं च्युतं च च्यवमानं च लक्षयति सोऽपरः प्रकाशः । येन तु स्थापनावसरे सर्वतत्त्वानि सगुणधर्माण्यानन्त्येन दृष्ट्वा योज्यायोज्यभावेन विवेचयति स पर इति । विषयिणामिष्टविषयेष्विवानिच्छतोऽपि रुद्रे चित्तवृत्तिप्रवाहः समीपं, तदेवा-त्यन्तोत्कर्षापन्नं देवनित्यत्वमित्येत्सर्वं धर्मज्ञापकत्वेनोक्तमिति । तृतीयं लाभ-

माह । अथ नित्यत्त्वमिति । अथेत्यानन्तर्ये तपोऽनन्तरं यद्देवे भावाभ्यास-लक्षणं नित्यत्वं तृतीयो लाभः स उच्यते । न तु नित्ययुक्ततेत्यर्थः । अव्युच्छिन्न-प्रवाहो नित्यत्त्वमत्राभिप्रेतं यथा नित्यप्रवाहा गङ्गेति । चतुर्थं लाभमाह स्थिति-रिति । दोषहेतुजालेभ्यश्छिन्नस्य मूलाख्यानिवृत्तौ चित्तस्य रुद्रेऽवस्थानमत्य-न्तनिश्चलत्वं स्थितिरुच्यते । तत्समकालं योगिनोऽसङ्गित्वादीनि नव लक्षणानि भवन्ति । तत्र लक्ष्यमाणस्य संगस्यात्यन्तव्यावृत्तिरसङ्गित्त्वम् । केवलरुद्रतत्त्वा-वस्थितचित्तत्त्वं योगित्वम् । अनुरुध्यमानचित्तवृत्तित्त्वं नित्यात्मत्त्वम् । अप्रा-दुर्भावि चित्तत्वं अजत्वम् । परमसमता मैत्रत्वम् । शरीरादिवियुक्तत्वमे-कत्वम् । सर्वाशङ्कास्थानातिक्रान्तत्त्वं क्षेमित्त्वम् । बाह्याध्यात्मिकक्रियाशून्यत्वं निःक्रियत्वम् । समस्तचिन्तारहितत्वं वीतशोकत्वमित्येतानि लक्षणान्यस्य योगस्यात्यन्तोत्कृष्टत्त्वप्रतिपादनार्थमुक्तानि । पञ्चमं लाभमाह सिद्धिश्च इति । सिद्धिः पूर्वव्याख्याता । सानुमानादप्यवगम्यते । निरुपचरिता मुक्तात्मानः परमैश्वर्योपेताः पुरुषत्वे सति समस्तदुःखबीजरहितत्वान्महेश्वरवत् । परा-भिप्रेता मुक्तात्मानः परमैश्वर्यविकलत्वादस्मदादिवदिति । चकारो न्यूनाधिक-व्यवच्छेदसूचकः । पञ्चमीति लाभानां पञ्चत्वोपसंहारार्थमिति ॥ ६ ॥

अथैते लाभाः किं देशनियमेन प्राप्तव्या यथा ब्रह्मचारिगृहस्थवानप्रस्थ-भिक्षुभिर्विद्याप्रजातयोगाख्या लाभाः किं वा देशानियमेनापि पञ्चविंशति-तत्वज्ञेन कैवल्यवदिति ? । उच्यते । देशनियमेन । यतस्तदर्थमिदमाह—

गुरुर्जनगुहादेशः स्मशानं रुद्र एव च ॥ इति

आर्षत्वाद्वा यथाश्रुतेऽप्यदोषः । गुरुः पूर्वोक्तस्तदाज्ञयाऽवतिष्ठमानस्तदा-श्रितो भवति, यथा ग्रामण्यमाश्रितो ग्राम इति । तत्रादिधर्मावस्थस्य तावदा-यतने वास इत्यत्रायतनशब्दो गुरावेव द्रष्टव्यो, लिङ्गकर्तेत्यादिज्ञापकादुपचा-राद्वा मञ्चशब्दवत् । यद्यप्यायतनसूत्रे प्रतिषेधः श्रूयते तथापि देशप्रस्तावे गुरुरभिप्रेत एवाचार्यो लोक इत्यादि ज्ञापकाभ्यनुज्ञानात् । अत एव गूढव्रतोपदे-शादायतने वास इत्यत्रायतनशब्दो जने विवक्षितो मर्यादयायतनादिति कृत्वा बद्धस्य रुद्रस्य हि शिवायतनवासानुपपत्तेः । यदाऽपि वासस्तदाऽपि जनाधीन एवेत्यतो द्वितीयावस्थस्य जन एव देशः । जनशब्देनात्र धर्माधर्मजननाधिकृता वर्णाश्रमिणोऽभिधीयन्त इति । तृतीयावस्थस्य गुहा देशः । गुहाग्रहणं सूत्रा-

र्थोपलक्षणार्थमतः शून्यागारगुहयोरन्यतरं व्यासङ्गादिदोषवर्जितं यत्प्राप्यते तत्र वस्तव्यम्। देशग्रहणं तत्रावस्थानमात्रेण गुहाया देशत्वज्ञापनार्थं न तु गुरुजनवत्तदायत्तत्वेनेति। चतुर्थावस्थस्य श्मशानदेशः। श्मशानं च प्रसिद्धमेव ग्राह्यम्। तस्य च न गुहावद्देशत्वं किंत्वादेहपातात् तत्रैवानिर्गच्छता स्थेयमित्ययं विशेषः। पंचमावस्थस्य देशो रुद्रः। रुद्रो भगवान्महेश्वरः। प्रागपि रुद्रायत्तत्वात्साधकस्य रुद्रोऽस्त्येव देशस्तथापि प्रागन्यव्यपदेशोऽप्यस्ति, साम्प्रतं पुनः शरीरादिरहितस्य सर्वदेशविकलत्वादवधारणं करोति रुद्र एवेति। चशब्दो न्यूनाधिकव्यवच्छेदसूचक इति।

अथ किमेतद्देशावस्थितिमात्रेणैवैते लाभाः प्राप्यन्ते कल्पवृक्षदेशावस्थितिवत्?। उच्यते। न। किं तर्हि देशभेदवदुपायभेदोऽप्यस्ति। यतस्तत्प्रतिपादनार्थमाह—

वासश्चर्या जपध्यानं सदारुद्रस्मृतिस्तथा
प्रसादश्चैव लाभानामुपायाः पञ्च निश्चिताः ॥ ७ ॥ इति।

ग्रहणधारणोहापोहविज्ञानवचनक्रियायथान्यायाभिनिवेशानां वास इति संज्ञा तान्त्रिकी शिष्टैः कृता। तत्र सकृदुचारितवाक्यस्य सम्यगर्थप्रतिपत्तिसामर्थ्यं ग्रहणम्। गृहीतस्य चिरकालव्यवधानेऽपि स्मरणसामर्थ्यं धारणम्। एकदेशश्रवणात् तन्न्यायेनापूर्वार्थप्रतिपत्तिसामर्थ्यमूहः। आचार्यदेशीयैरुक्तार्थानां युक्तायुक्तप्रविभागेन प्रतिपत्तित्यागसामर्थ्यमपोहः। श्रुतस्यार्थस्यानेकधाविचारणे परप्रतिपादने च सामर्थ्यं विज्ञानम्। व्याहतपुनरुक्तादिदोषरहितं वाक्यं वचनम्। निर्दुष्टशब्दोच्चारणेनाचार्यं परितोषयतो मिथ्याज्ञानमलनिवृत्तौ विद्याऽभिव्यक्तिर्भवति। तथोत्थानप्रत्युत्थानादिका गुरौ परिचर्या क्रियेत्युक्ता। युक्त्यापि पूर्वोत्तराविरुद्धशास्त्रार्थपर्यालोचने तदर्थानुष्ठानार्थमतियत्नो यथान्यायाभिनिवेशः। तथा चोक्तम्—

पूर्वोत्तराविरोधेन वाक्यार्थं ह्यविचालितम्।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

धर्मस्योपायः चर्या। भस्मस्नानादिर्मूढान्तः क्रियासमूहश्चर्येत्युच्यते। सा च त्र्यङ्गा दानयागतापाङ्गेति। पञ्चसु पवित्रेष्वावर्त्यमानेषु दशभिर्नमस्कारैः परमेश्वरायात्मसमर्पणं दानम्। तदेवातिदानमनावृत्तिफलत्वात्। अन्यत्तु कुदानमावृत्तिफलत्वादिति। परमेश्वरनियोगाभिसन्धिना भस्मस्नानादिक्रियाणां यथावि-

हितकरणं यागः । स एवातियागोऽन्यस्तु कुयागः पूर्वोक्तहेतुद्वयात् । स्वविध्य-भिनिविष्टस्यैव त्रिविधदुःखोपनिपाते सति अनुपायतः प्रतीकारमकुर्वतः सहिष्णुत्वं तापः । स एवातितापोऽन्यत्तु कुताप इति । सा त्र्यङ्गापि चर्या द्विविधा, व्रतं द्वाराणि चेति । तत्र स्नानशयनोपहारजपप्रदक्षिणानि व्रतम् , धर्मनिष्पत्त्यध-र्मोच्छेदार्थं प्राधान्येन क्रियमाणत्वात् । द्वाराणि तु क्राथनस्पन्दनमन्दनशृङ्गार-णापितत्करणाऽपितद्भाषणानि । अपमानपरिभवपरिवादनिष्पादनद्वारेण पूर्वो-त्पन्नयोर्धर्माधर्मयोरायव्ययनिमित्तत्वादिति क्रमः स्वरूपं चैषां भाष्य एव प्रपञ्चितम् । तदनुसारेण शिष्यहितार्थं मयापि लेशतः प्रदर्श्यते । प्रागादित्योद-यात् घटिकाद्वयं पूर्वाह्णसन्ध्या । सा त्रिदेवता । प्रथमा ब्राह्मी, मध्यमा वैष्णवी, अन्त्या रौद्री । तत्र पूर्वसन्ध्ययोः शौचं कृत्वा भस्म संस्कर्तव्यम् । कर्तृकारकादिदो-षरहितं शुक्लादिगुणयुक्तं च भस्मार्जितं शिवदक्षिणमूर्तौ मन्त्रैः संस्कृत्य प्रदक्षिणं च दत्त्वा सूर्यरूपिणं भगवन्तं लोचनत्रयेण प्रसन्नदृष्ट्या भस्म पश्यन्तं ध्यायेत् । तदनु चाचार्याय शिवतत्त्वानुरञ्जितदृष्टये ज्येष्ठभ्रात्रे वा निवेदयेत् । तदन्वे-कान्ते शुचौ प्रदेशे जन्तुस्थावरहीने पञ्च पवित्राण्यावर्तयतैव स्थेयं रौद्रसवनं यावत्ततो भगवन्तं प्रणम्य त्वदाज्ञां करोमीत्यभिसंधाय जपन्नेवापादतलमस्तकं यावत् प्रभूतेन भस्मनाऽङ्गं प्रत्यङ्गं च प्रयत्नातिशयेन निघृष्य निघृष्य स्नानमा-चरेदित्येवं मध्याह्नापराह्णसन्ध्ययोरपीति । एतावदत्र विशिष्यते । मध्याह्ने प्रथमा ब्राह्मी, मध्ये मस्तकोपरिस्थिते रवौ रौद्री, तदन्ते वैष्णवी, अर्कास्तसम-योत्तरत्र प्रथमा रौद्री, तदनु वैष्णवी, तदन्ते ब्राह्मी चेति । सर्वत्र रौद्रसवनमेव स्नानकालः । एवं स्नानं निर्वर्त्य जपन्नेवायतनं गत्वा शिवं भक्त्यतिशयेन प्रणम्य स्नानं निवेद्य च शनैर्गर्भगृहं प्रविशेत् । तदनु मूर्तिदक्षिणे भूप्रदेशे जानुनी पातयित्वा हृदि चाञ्जलिं बद्ध्वा मूर्त्तिस्थं साक्षादिव शिव पश्यन् यद्यनिवृत्तप्रत्याहारस्तदा गतमात्र एव हसितं कुर्यादित्येके । वयं तु पश्यामोऽभिगम्य च यत्पूर्वं जपतीत्यादि भाष्यस्यार्थो यदि विचार्यते तदाऽवश्यं गत्वा संयतात्मनोत्तराभिमुखेन प्रत्याहारविशेषार्थं जप्तव्यं, जप्त्वा तु शिवध्यानासक्त एवाट्टहासं पुनः पुनः कुर्यात् । तदनु गीतमा-रभ्य गायन्नेवोत्तिष्ठेत् । ततो गीतसहितमेव नृत्यं कुर्यात् । तत्रादौ गीतं परिसमाप्य पश्चान्नृत्यं समापयेत् । तदनु पूर्वोक्तविधिनोपविश्य शिवं ध्यायन्नेव हुडुक्कारं कृत्वा नमस्कारं कुर्यात् तदनु जपमिति । अत्र जपन-मस्कारौ मानसावेव, नृत्यं कायिकमेव, हसितगीतहुडुक्कारा वाचिका एवेति

नियम इष्टः। तत्र दीर्घोच्छ्वासत्रयं यावद्धसितं, दण्डकत्रिरावर्तनं यावद्गीतनृत्ये, गम्भीरहुडुक्कारत्रयं, षष्टि नमस्कारान्, पञ्चपवित्राणां त्रिरावर्तनं कुर्यादित्याह भगवानाचार्यः स्वामी मम येनाहमज्ञानार्णवादुत्तारितः। टीकाकारास्तु सर्वमा-परितोषात् कर्तव्यमित्येवं प्रतिपन्नाः। तदेवं निर्वर्त्योपहारं ध्यायन्नीशं हसित-गीतनृत्यहुडुक्कारनमस्कारजप्यैः षडङ्गोपहारं भगवन्महादेव! युष्मदनुज्ञया निर्व-र्तितवानहमवभृथस्नानं च करिष्यामीत्येवं निवेदयेत्। ततो निष्क्रम्येशं प्रणम्य प्रणामान्तं प्रदक्षिणत्रयं जपन्नेव शनैः कुर्यात्। ततोऽवभृथस्नानं कृत्वा भगवँल्ल-कुलीशादीन् राशीकरान्तांश्च तीर्थकराननुक्रमेण यथावद्भक्त्या नमस्कुर्यात्त-दनु प्रदक्षिणमेकमिति। अन्यदा तु यावदिच्छं प्रदक्षिणं जपन्नेव कुर्यात् पञ्च-मन्त्रजपस्तु केवलोऽपि धर्महेतुरिति। अथायतनसन्धिनं भूप्रदेशं दिवा परिगृही-तस्थावरादिदोषवर्जितत्वेन सुपरीक्षितं सन्ध्यावसाने वस्त्रान्तादिमृदुपवित्रेण वि-वेच्य भस्मनैव शुचिं कुर्यात्। तदनु तत्रोपविश्य विध्यभिनिविष्टस्तावत्तिष्ठेद्या-वदतिनिद्राऽभिभूतः श्रान्तश्च भवति। ततः पुनरुत्थाय विवेचयेत्। तदनु मन्त्रैः संस्कृत्य भस्म प्रभूतं प्रस्तरेत्। ततस्तत्र पंच मन्त्रानावर्तयन्नेव स्वपेत्, पुनरुत्था-यानेनैव विधिना स्वपेद्येनाश्वेव शुद्धिवृद्धी भवतः। सुप्तस्यापि प्राणात्यये चाति-गतिः स्यादन्यथा विधिभ्रष्टस्य संसारापत्तिरेवेति। एवं प्रथमावस्थायां विधिम-नुष्ठाय यदा खलु प्राप्तज्ञानः प्रक्षीणकलुषः कृताभ्यनुज्ञश्च भवति तदावस्थान्तरं गत्वा रङ्गवदवस्थितेषु जनेषु मध्ये नटवदवस्थितो विवेच्य विवेच्य क्राथना-दीनि कुर्यात्। तत्रासुप्तस्यैव सुप्तलिङ्गप्रदर्शनं क्राथनं, वाय्व्यभिभूतस्येव शरी-रावयवानां कम्पनं स्पन्दनम्, उपहतपादेन्द्रियस्येव गमनं मन्दनम्। रूपयौवनसम्पन्नां स्त्रियमवलोकयन् कामुकमिवात्मानं यैर्लिङ्गैः प्रदर्शयति त-च्छृङ्गारणं, कार्याकार्यविवेकशून्यस्येव लोकनिन्दितकरणमपितत्करणं, व्याह-तापार्थकादिशब्दोच्चारणमपितद्भाषणमिति। न चैषां क्रमो नियम्यते। किन्त्व-पमानादिनिष्पादकत्वं येन परिभवं गच्छेदित्युपदेशादवाप्तितुल्यत्वेनापमानादे-रिष्टतमत्वादिति। एवं तर्हि हिंसास्तेयादिकरणदुष्टशब्दोच्चारणप्रसङ्गोऽपि स्यादपमानादिनिष्पादकत्वादिति। नापितत्करणाऽपितद्भाषणो.... देवाशेषक्रि-याव्याप्तावहिंसाद्यविरोधज्ञापनार्थत्वात्क्राथनाद्यारम्भस्येति। देवनित्यत्वे कस्तर्हि उपाय इत्याह जपध्यानम् इति। तत्र तृतीयचतुर्थकस्य मन्त्रस्यावर्तनं जपः। स द्विविधः प्रत्याहारफलः समाधिफलश्चेति। तत्राद्यः प्रत्याहारफलस्तन्निष्प-त्तौ च क्रियमाणो जपः समाधिफल इति। ननु चान्यासक्तत्वे.... क्रियमाणो जपः

संवत्सरशतेनापि न प्रत्याहारं करोत्यपि तु दोषमेव तस्य जनयतीति । सत्यमेवमेतत् । किन्तु प्रत्याहारद्वैविध्यमिहेष्टं परापरभेदात् । तत्रान्तःकरणपूर्वको ऽपरः । तत्सहितेन जपेन निर्मलीकृतं चित्तं प्रयत्ननिरपेक्षमपि ब्रह्मण्येवालातचक्रवदवतिष्ठते यदा तदाऽसौ परः प्रत्याहारो जपपूर्वक एवायमित्युक्तः । स ह्यनेकजन्मोपार्जितं कर्म लक्षणमात्रेण दग्ध्वा ध्येयतत्त्वे चित्तं स्तम्भनिक्षिप्तायःकीलकवन्निश्चलीकरोति । रुद्रतत्त्वे सदृशश्चिन्ताप्रवाहो ध्यानम् । तद् द्विविधं जपपूर्वकं धारणापूर्वकं च । तत्र जपपूर्वकं प्रसङ्गेनैव पूर्वमुक्तं, धारणापूर्वकं तूच्यते । निरालम्बनं चित्तममूढस्य धारणम् । संहृतमूर्च्छाद्यवस्थस्यापि चित्तं धृत्तालाभान्निरालम्बनमस्तीति तन्निवृत्त्यर्थममूढस्येत्युक्तम् । यो विद्याऽनुगृहीतया बुद्ध्या स्वं चित्तं निरालम्बनं करोति सोऽमूढ इत्युच्यते । तया धारणया निर्मलीकृतं चित्तं रुद्रतत्त्वे स्थापितं सुदीर्घकालं न च्यवत इत्यनेनैव विशेषेण पूर्वध्यानापेक्षयेदं धारणासहितं ध्यानं परमित्युक्तं श्रीमद्भाष्यकृता परमयोगिना । यद्यप्येव दीक्षाप्रभृति चित्तं निर्मलीकर्तुं न शक्यते तथापि धानुष्कचित्रकरादिवदभ्यासार्थं सर्वावस्थासु यथाशक्त्या ध्यानं कर्तव्यं मृत्युकालस्यानिश्चितत्वात् । अन्यथा हि युद्धकाल एव अश्वदमनन्यायः स्यादिति ।

इत्थं सम्यग्विधिं ज्ञात्वा यस्तु ध्यायति शङ्करम् ।
निशादावर्धरात्रे च निशान्ते चाच्युतव्रतः ॥
यामं यामं तदर्धं वा यावच्छक्त्या दिवापि च ।
सन्त्यज्यासक्तिमन्यत्र पश्यन्दुःखमयं भवम् ॥
परं वैराग्यमास्थाय लघ्वाहारो जितेन्द्रियः ।
उत्साहातिशयं कुर्वन् शुद्धोत्कर्षं विवर्धयन् ॥
नैरन्तर्येण षण्मासं ब्रह्महत्यादिमानपि ।
एकं संवत्सरं वापि तच्चित्तस्तन्मयो भवेत् ॥
स हत्वा दुष्कृतं घोरं रागादीनां च पञ्जरम् ।
पश्यत्येवाखिलं तत्त्वं सर्वोपाधिसमन्वितम् ॥
सर्वसत्त्वाधिपं पश्यन्ननन्तं शिवमव्ययम् ।
यो न पाशुपतादन्यैर्योगीशैरपि दृश्यते ॥
तं दृष्ट्वा परमैश्वर्यं लब्ध्वा स्यान्निर्भयः सदा ।
अज्ञात्वाऽपि विधानं यस्तेषु कालेषु सुव्रतः ॥
सद्भक्त्युत्साहवैराग्यैर्नित्यं ध्यायति शङ्करम् ।

तस्यापीशः प्रसन्नस्तां सिद्धिं दद्यादनुत्तमाम् ॥
यां प्राप्य त्यक्तसंसारः स्वतन्त्रः शिववद्भवेत् ।
ध्यायन्नेव तमीशानं यदि प्राणान्विमुञ्चति ॥
तस्य देहान्तकाले वै दद्यादीशः परां गतिम् ।
अब्भक्षा वायुभक्षाश्च ये चात्युग्रतपश्चराः ॥
क्षित्यादीनां च दातारो यज्ञानुष्ठायिनश्च ये ।
संवत्सरसहस्रेण यां सिद्धिं प्राप्नुवन्ति ते ॥
तां प्राप्नोत्यर्धयामेन जपध्याने रतो यतिः ।
ज्ञात्वैवं योगमाहात्म्यं देहादेः स्थित्यनिश्चयम् ॥
दुःखार्णवं च संसारं न कुर्यादन्यथा मतिम् ।
शरीरं ध्रियते यावद्यावद्बुद्धिर्न हीयते ॥
तावद्ध्यानं जपं चैव यावच्छक्त्या समभ्यसेत् ।
इष्टं द्रव्यं यथा नष्टं कश्चिद्ध्यायत्यहर्निशम् ।
तद्वद्रागाद्यसंसृष्टं शिवं ध्यायेदनालसः ॥
विवक्षोर्वाग्विशुद्धः प्राग् यद्वचेतसि भासते ।
तद्वत्तं प्रणिधानेन दिवा रात्रौ च चिन्तयेत् ॥
गुणैर्धर्मैर्विशिष्टं वा भावयित्वाऽऽशु निश्चितः ।
पश्चात्तं केवलं ध्यायेद्बुद्ध्या कृत्वा पृथक्ततः ॥

इत्येतत्पाशुपतयोगविधानं परमोत्तमं सुरैरपि अलभ्यं परमगुह्यमा-परमेश्वराद्गुरुपारम्पर्योपदेशैकसमधिगम्यं स्वल्पप्रज्ञानामनुग्रहार्थं व्यक्तमेवोपन्य-स्तम् । यस्त्वेवं न श्रद्दधात्यपरीक्षितेभ्यो वा ददाति तस्य ब्रह्महत्यादिभ्योऽपि गरीयः पातकं स्यादित्यतः शिष्यपरीक्षायां श्रद्धायां च यत्नः कर्तव्य इति ।

स्थितेरुपायमाह । सदारुद्रस्मृतिस्तथा इति । देवनित्यत्वमेव सदास्मृतिरित्यु-च्यते । स्थितिं प्रत्युपायत्वप्रतिपादनार्थं संज्ञान्तराभिधानमिति । तथाशब्दः समानार्थः। यथा देवनित्यत्वं प्रत्यध्ययनध्यानयोरेवोपायत्वं धर्मं च प्रति चर्याया एव तदनुग्राहकत्वेनानुस्नानादियमयन्त्रणादिरप्युपायत्वमुपचर्यते, तथा स्थितिं प्रति स्मृतिरेव प्राधान्येनोपायस्तदनुग्राहकत्वेनेन्द्रियजयोऽप्युपायत्वेनोक्त इत्यतो नेन्द्रियजयादित्यनेन विरोधः । सङ्गादिनिवृत्तेरुपायान्तरमिन्द्रियज-य इत्येके। तन्न पञ्चोपायत्वविरोधात्, त्यागादानसूत्रभाष्यविरोधाच्च । देवनि-

त्यत्वेन्द्रियजययोरभेद इत्यन्येऽपि। तदपि न। लक्षणभेदादिन्द्रियोत्सर्गग्रहयोः प्रभुत्वमिन्द्रियजयः। देवे भावाभ्यासतरत्वं देवनित्यत्वमिति। सिद्धेस्तर्ह्युपायो वाच्य इत्यत आह। प्रसादश्चैव इति। कारणस्य स्वगुणदित्सा प्रसाद इत्युच्यते। चशब्दो न्यूनाधिकव्यवच्छेदसूचकः। एवशब्दः प्रसादस्या न्यानपेक्षत्वमवधारयति। लाभानामुपाया इत्येतद्गम्यमानार्थस्याप्यभिधानं शास्त्रान्तरोक्तानां मोक्षोपायनामनुपायत्वज्ञापनार्थम्। पञ्च इत्युपसंहारार्थम्। निश्चिता इत्याप्तैर्दृष्टा इत्यर्थः॥ ७॥

अथ किमेतैरुपायैः पञ्चलाभा एव प्राप्तव्या इति, न किं तर्हि मलाश्च पञ्च क्षपणीयाः?। के पुनस्ते इत्याह—

मिथ्याज्ञानमधर्मश्च सक्तिहेतुश्च्युतिस्तथा।
पशुत्वं मूलं पञ्चैते तन्त्रे हेयाधिकारतः॥ ८॥

तत्र प्रमाणाभासजं ज्ञानं मिथ्याज्ञानमुक्तं संशयविपर्ययादिलक्षणम्। शास्त्रान्तरेभ्योऽपि तर्हि संशयादिनिवृत्तेरविशेषप्रसङ्ग इति चेन्न शास्त्रान्तरप्रणेतॄणामपि विपर्ययानिवृत्तिप्रतिपादनादाचार्यवैशेष्यप्रकरणे। तन्न शास्त्रान्तरेभ्योऽपि संशयादिनिवृत्तिरिति। कामक्रोधद्वेषाः कलुषं तस्याप्यज्ञानेऽन्तर्भावः। कस्मात्?। अव्यक्तावस्थागमने प्रत्यनीकत्वात्। तदिदं संशयादि कलुषं च सह बीजेन मिथ्याज्ञानमित्युच्यते। द्वितीयं मलं दर्शयति अधर्मश्च इति। पाप्मबीजं पापमेवात्राधर्म इत्यभिप्रेतम्। तस्य सविकारस्यैकमलत्वं विकारविकारिणोरनन्यत्वादिति। सत्यप्यज्ञानकलुषसङ्गच्युतिहेतोरधर्मत्वे पापाख्य एवात्राधर्मोऽभिप्रेत इति चः सूचयति। तृतीयं मलमाह। सक्तिहेतुः इति। सक्तिः सङ्गः विषयासक्तिलक्षणसुखं भाष्ये सुखाभिमान इत्यनेनोक्तम्। तस्यैव लक्षणार्थं भाष्यम्, 'अविवेचनमिश्रणप्रेरणलक्षणो वनगजवत्' इति। तस्य सङ्गस्य हेतुस्तन्मयकारणं विध्यन्तरोपार्जितो धर्मः सङ्गकर इति य उक्तः सह विकारेणासौ तृतीयो मल इति। चतुर्थं मल माह। च्युतिस्तथा इति। रुद्रतत्त्वादीषच्चित्तं च्यवते विषयं न प्राप्नोति तच्चित्तच्यवनं च्युतिरित्युच्यते। तथा शब्द समानार्थे। यथा मिथ्याज्ञानस्य स्वबीजेन सह मलत्वम्, अधर्मसङ्गकरयोश्च सविकारेण, तथा च्युतेरपि ऊष्मवदवस्थिताधर्माख्येन स्वबीजेन सह मलत्वमिति। अत्र भाष्यविरोधान्न मिथ्याज्ञानकलुषपाप्मसङ्गच्युतयः पुरुषस्य भावाश्चित्तविद्ययोर्वा। नापि कलुषमि-

च्छाया भावः किन्त्वधर्मविकारा एवैते ज्ञानेच्छाभ्यां सह क्षीरोदकवदभिन्ना इव गृह्यन्ते। तथा च सत्कार्यविचारे प्रपञ्चितमेतदिति। पञ्चमं मलमाह पशुत्वम् इति। धर्माधर्मव्यतिरिक्तः प्रतिघातानुमेयः पुरुषगुणः पशुत्वम्। तस्य चतुर्दशलक्षणोपेतस्य मलत्वम्। तानि च लक्षणान्यसर्वज्ञत्वादीन्यपतित्वान्तानि सर्वज्ञत्वादिविपर्ययेणैव व्याख्यातानीति। तच्चेत्थंभूतं पशुत्वं संसारस्यानादिकारणं प्रधानभूतमित्येवं मत्वाह मूलमिति। तथाहि कैवल्यगतानामन्यमलाभावेऽपि पशुत्वादेव पुनः संसारापत्तिरिति। पञ्च इति न्यूनाधिकव्यवच्छेदेनोपसंहारार्थम्। एते इत्यवधारणार्थम्। एते एव संसारबन्धात्मका मला न तु शास्त्रान्तरोक्ता भोक्तृभोग्यसम्बन्धादय इत्यर्थः। क्व पुनरित्थंभूता मलाः प्रसिद्धा इत्याह। तन्त्रे साक्षान्महेश्वरप्रणीतमथशब्दादि शिवान्तं शास्त्रं तन्त्रं तस्मिन्नेते प्रतिपादिता इत्यर्थः। धर्मज्ञानादेरपि त्यज्यमानत्वादधर्मादेरिव मलत्वं प्राप्तमित्याशङ्क्याह हेयाधिकारतः इति। येषां कर्दमादिवद्दुःखहेतुत्वं मत्वा साधकः क्षपणार्थमधिक्रियते त एव मला न तु येषां पुष्पादिवदनिच्छतोऽपि विनाश इत्यतो हेयाधिकारादज्ञानादय एव मला इति। हेयाधिकारिका इति वा पाठस्तत्राप्ययमर्थः। हेयत्वेन क्षपणीयत्वेनाधिकारो योग्यताऽस्ति येषां ते हेयाधिकारिणस्त एव हेयाधिकारिकाः। स्वार्थे कप्रत्ययः। अधिकारशब्दाद्वा इकण्प्रत्यये कृते हेयपदेन कर्मधारयस्तदयमर्थो यतो हेयाधिकारिका एवात्र मला विवक्षिताः। तस्मान्न धर्मज्ञानवैराग्यादयोऽपि मला इति।

इत्येतत्सर्वमाख्यातं संक्षिप्याब्धिसमं मया।
आचार्याणां प्रसादेन ज्ञानं पञ्चार्थलक्षणम्॥
किं ज्ञातैर्बहुभिः शास्त्रैः स्वानुष्ठानापहारिभिः।
इदमेवोत्तमं ज्ञात्वा योगाभ्यासरतिर्भवेत्॥
कृतकृत्यं स्वमात्मानं श्रुत्वैतन्मन्यते तु यः।
तस्मै देयमिदं ज्ञानं नान्यस्मिन् सिद्धिमिच्छता॥
यस्तु मर्यादाहीनेभ्यो दद्यात्केनाऽपि हेतुना।
स गुह्यभेदतो गच्छेत्सह शिष्यैरधोगतिम्॥
नमः सद्गुरवे तस्मै सर्वविद्यान्तगामिने।
सच्छ्लोकैरष्टभिर्येन पञ्चार्थाब्धिः प्रदर्शितः॥

आचार्यभासर्वज्ञविरचितायां गणकारिकायां रत्नटीका परिसमाप्ता॥

## APPENDIX I.

# विशुद्धमुनिकृतं यमप्रकरणम्

गुरुं परं तीर्थकरं स्मृत्वा लकुलधारिणं ।
हिताय विप्राणामस्मिन्वपुरादाय यः स्थितः ॥ १ ॥
कुशिकाद्यपरगुरूंस्तथा यथा यथाप्रज्ञम् ।
भाष्यकृतोक्तं तद्वक्ष्ये यमप्रकरणं तथा ॥ २ ॥
अहिंसा ब्रह्मचर्यं च सत्यासंव्यवहारकौ ।
अस्तेयं गुरुशुश्रूषा शौचमाहारलाघवम् ॥ ३ ॥
अक्रोधोऽप्रमाद उक्ताः पाल्यन्त इति शंभुना ।
दशैवादेहपतनात्पश्चार्थे योगिनां यमाः ॥ ४ ॥
जरायुजाण्डजोद्भिज्जस्वेदजभूतसंघस्य ।
सर्वस्य दुःखानुत्पादस्तामहिंसां विदुर्बुधाः ॥ ५ ॥
त्रयोदशानां पश्चार्थे जिह्वोपस्थस्य संयमः ।
इन्द्रियाणां विशेषेण ब्रह्मचर्यमिति स्मृतम् ॥ ६ ॥
धर्मस्य साधनानङ्गं वचनं यत्प्रकीर्तितम् ।
प्रतिषेधो हि तस्योक्तं सत्यं सत्यविचारकैः ॥ ७ ॥
दृष्टार्था सङ्गतिर्या च वर्णैराश्रमिभिः समम् ।
तत्त्यागोऽसंव्यवहारं प्राहुरेते मुमुक्षवः ॥ ८ ॥
अदत्तानतिसृष्टस्य तथाऽनभिमतस्य च ।
ग्रहणमनुपायलाभोऽनधिकारप्रतिग्रहः ॥ ९ ॥
अनिवेदितोपयोगश्च स्तेयं षड्विधं मतम् ।
तस्य वर्जनमस्तेयं प्राहुरस्तेयचिन्तकाः ॥ १० ॥
वाक्कायमनोभिर्गुरौ हितभावेन वर्तनम् ।
गुरुशुश्रूषा कायान्तःकरणात्मविशोधनम् ॥ ११ ॥
शौचमुपार्जितान्नस्य स्ववृत्त्यैवाविरोधतः ।
विधियोगानुष्ठानस्याभ्यवहारश्चिरंतनाः ॥ १२ ॥

आहारलाघवमूचुर्गुरवः पश्चिलागमे ।
इतरैरपकृतस्याप्यक्रोधश्चित्तशुद्धता ॥ १३ ॥
यथाविहितस्य विधियोगस्य सततं तथा ।
उद्यम एवानुष्ठाने सोऽप्रमादोऽभिधीयते ॥ १४ ॥
एवं यमान्व्याख्यायैषां दर्शनं सूत्रतोऽधुना ।
अनूद्यते तत्राहिंसा लब्धा कृतान्नसूत्रतः ॥ १५ ॥
इन्द्रियजयोपदेशात्तथा स्त्रीप्रतिषेधतः ।
ब्रह्मचर्यं तथा सत्यं व्याख्यानाद्युपदेशतः ॥ १६ ॥
असंव्यवहारः प्रेतोन्मत्ताव्यक्तादियोगतः ।
अवासः सूत्रतोऽस्तेयमनुत्सृष्टनिषेधतः ॥ १७ ॥
कथिता गुरुशुश्रूषा विद्वदाद्यभिधानतः ।
भस्मस्नानाच्छरीरस्य तथोपस्पर्शनादिभिः ॥ १८ ॥
भावस्य परिभावाद्यैः शौचमात्मन एव च ।
भैक्षोत्सृष्टयथालब्धैस्तथा चाहारलाघवम् ॥ १९ ॥
शूद्रनिषेधादक्रोधस्तथाऽतितापदेशतः ।
जप्याप्रमादनिर्देशादप्रमादो यमः स्मृतः ॥ २० ॥
षड्गोचरस्य भृत्येन विशुद्धमुनिनाऽल्पकम् ।
केवलार्थात्समुद्धृत्य यमप्रकरणं कृतम् ॥ २१ ॥

---

# विशुद्धमुनिकृतमात्मसमर्पणम् ।

---

श्वेतः सुतारो दमनः सुगोत्रः कङ्क एव च ।
लोकाक्षिजैगीषव्यौ च तथैव दधिवाहनः ॥ १ ॥
ऋषभो मुनिरुग्रश्च चित्रार्थालिश्च गौतमः ।
वेदशिरा गोकर्णश्च गुहावासिशिखण्डिनौ ॥ २ ॥
जटामाली चाट्टहासो दारुको लाङ्गली तथा ।
श्वेतः शूल्यथ दण्डी च सहिष्णुः सोमशर्मकः ॥ ३ ॥
लकुलीशश्चावतारा अष्टाविंशतिसङ्ख्यकाः ।
रुद्रस्य द्विजमोक्षाय वरदानाद् भृगोस्तथा ॥ ४ ॥

महेश्वर ! महादेव ! वामदेव ! मनोऽमनः ! ।
नत्वा लकुलिनं त्वेतं मयेदं किञ्चिदुच्यते ॥ ५ ॥
बलप्रमथनेशान ! घोर ! घोरतर ! ध्रुवम् ।
मोक्षं पञ्चार्थशास्त्रोक्तमहं यामि तथा कुरु ॥ ६ ॥
अघोराधिपते ! ईश । वाग्विशुद्ध ! त्रिलोचन ! ।
भक्तानुग्राहकस्तेन भक्तं मामनुकम्पय ॥ ७ ॥
महन्नीश्वर विप्रर्षे ! मया त्वन्मार्गगामिना ।
न गम्यते यथा मार्गो विरुद्धः क्रियतां तथा ॥ ८ ॥
अजातसन्नाद्यपते ! शिव ! कामिन् ! भवोद्भव ! ।
वैराग्यं मे ध्रुवं देहि शरीरारोग्यतां तथा ॥ ९ ॥
रुद्र ! काल ! कलाक्षेप ! सर्वभूतदमे रत ! ।
तथानुष्ठीयतां स्वामिन्मत्प्रसिद्ध्यति पञ्जिला ॥ १० ॥
शर्व ! तत्पुरुष ! ज्येष्ठ ! ब्रह्मन्नोङ्कार ! शङ्कर ! ।
मम सर्वेषु भूतेषु समभावो विधीयताम् ॥ ११ ॥
परो गुरुस्त्वं सर्वेष्वपरोभूः पुनर्मयि ।
सर्वं पञ्चार्थविज्ञानं प्रसादेन प्रवर्तय ॥ १२ ॥
नाथ ! तुभ्यं विशुद्धेन सम्यगाचार्यरूपिणे ।
कृत्वेति बहुधा लिप्सां कृतमात्मसमर्पणम् ॥ १३ ॥

# कारणपदार्थः

शिवभवविधिसायुज्यं सिद्धिं चाहं समासतो वक्ष्ये ।
वरदं प्रणम्य भक्त्या कुशिकादिविमोक्षकं रुद्रम् ॥ १ ॥
पत्यादिनिमित्तज्ञैर्यन्नित्यमुपास्यते विधानज्ञैः ।
तदिह शिवतत्त्वमाद्यं ज्ञेयं शास्त्रे प्रसाद्यं च ॥ २ ॥
अविकलममलमनन्तं यद्धैश्वर्यमिह शास्त्रतः कथितम् ।
तेन यतः पाति पशून् पतिरिति तस्मात्प्रकीर्त्तितो रुद्रः ॥ ३ ॥
सततमनिरुद्धशक्तिः त्रिष्वपि कालेषु विद्यते यस्मात् ।
सततं कारणभावात् सदिति शिवस्तेन निर्दिष्टः ॥ ४ ॥
भूतोत्पत्तिविनाशैः सर्वत्रैवादिकारणत्वेन ।
यस्मात्कारणमीशस्तस्मादाद्यः स कीर्तितः शास्त्रे ॥ ५ ॥

जन्मनि कालादियोगे नवलक्षणके सहैश्वर्ये ।
त्रिविधेऽप्यजातभावादजात इति कीर्त्यते तेन ॥ ६ ॥
भव इति विद्यादित्रितयं तस्योद्भव एव वृत्तिलाभो यः ।
उद्भावयेत्स्वशक्त्या शर्वस्तस्माद्भवोद्भवो ज्ञेयः ॥ ७ ॥
श्रैष्ठ्यं वामत्वं यत्स्वतन्त्रभावोऽथ देवदेवत्वम् ।
पशुसाधकेश्वराणां सर्वपरत्वात्स्मृतस्तथा ज्येष्ठः ॥ ८ ॥
रुतभयसंयोगकरो भूतानां यः स रुद्र इत्युक्तः ।
इच्छाकारी भगवान्कामी प्रोक्तो व्यवस्थया शास्त्रे ॥ ९ ॥
शमसुखनिर्वाणकरः शङ्कर इत्यप्रमादिभिः प्रोक्तः ।
क्षयकालहेतुभावात्कालज्ञैः काल इत्युक्तः ॥ १० ॥
स कला विकरोति यतो ह्यन्तरसृष्टौ हि भागविन्यासैः ।
कलविकरण इति संज्ञा तेनैव शिवस्य विन्यस्ता ॥ ११ ॥
धर्मादिं बलवर्गं मथ्नाति यतः प्रकर्षतः सर्वम् ।
स बलप्रमथननाम्ना तस्माद्रुद्रोऽथ निर्दिष्टः ॥ १२ ॥
रतिरञ्जनाधिवासनया प्राणिष्वञ्जसा भवस्थेषु ।
दमनं तद्धि पशूनां करोत्यतः सर्वभूतदमनः सः ॥ १३ ॥
संस्थाद्वयेऽपि यस्मात् कालाद्यावस्थितेह शक्तिर्वै ।
तस्मात्स्वशक्तियोगात् मनोऽमनाख्यो भवेत्कामी ॥ १४ ॥
शान्तो ह्यघोररूपो घोरोऽथ भयानको हि विज्ञेयः ।
मोहयति सर्वलोकान्घोरतरो देवदेवेशः ॥ १५ ॥
शरणं सर्वपशूनां वृतमपि सर्वं ह्यशेषतो यस्मात् ।
शरणाद्धरणाच्च हरः शर्वः परिकीर्तितो गुरुभिः ॥ १६ ॥
परमेश्वराख्यतत्त्वं पतित्वसत्वादिधर्मभेदेऽपि ।
विभुतागुणेन योगाद्यदभिन्नं तदिति तेन शिवः ॥ १७ ॥
एकोऽत्यन्तविशुद्धः पुरुषः सर्वस्य पूरकत्वेन ।
नित्यैश्वर्यमहत्त्वात् स्वातन्त्र्याच्चेश्वरो महादेवः ॥ १८ ॥
दुःखान्तस्य निमित्तं यद्ध्यानं ध्यानिनां मतं तस्य ।
एकविषयः स यस्मादोङ्कारस्तेन निर्दिष्टः ॥ १९ ॥
भगवान् क्रियाख्यशक्तिस्वरूपभावादृषिः स्मृतः कविभिः ।
ज्ञानाभिधानशक्तिस्वभावतो विप्र इत्युक्तः ॥ २० ॥

अनयोराश्रयपूरकनिरतिशयानन्तविषयभावेन ।
ज्ञानक्रियाख्यशक्त्योराश्रयभावान्महानीशः ॥ २१ ॥
सर्वत्र सर्वकालं नित्यत्वादविचलस्वभावेन ।
यस्मात्स वर्ततेऽस्मादेष शिवः सूरिभिः कथितः ॥ २२ ॥
गुणधर्मद्वारेण हि वाचो यस्मादिह प्रवर्तन्ते ।
गुणधर्मव्यतिरिक्ताविशेषितो वाग्विशुद्धोऽतः ॥ २३ ॥
ऐश्वर्यस्य विधाता सर्वस्य ततो महेश्वरः प्रोक्तः ।
निःशेषकार्यजातप्रभुरीश इतीरितो मुनिभिः ॥ २४ ॥
सर्वासां विद्यानां प्रभुरिति गदितस्तथेशानः ।
यत्सर्वभूतविषयं प्रभुत्वमस्येश्वरस्तेन ॥ २५ ॥
पत्युश्चाधिपतित्वाद् ब्रह्मत्वाचैव सर्वभावानाम् ।
सततानन्दगुणत्वाचाधिपतिर्ब्रह्मशिवनामा ॥ २६ ॥

॥ कारणपदार्थः समाप्तः ॥

# रुद्रनामानि

नमो रुद्राय भवाय शर्वाय च नमोनमः ।
ईशानपशुपतिभ्यां भीमोग्राभ्यां नमोनमः ॥ १ ॥
महादेवाय गुह्याय सुदेवाय हराय च ।
वामदेवाय शान्ताय तथोमापतये नमः ॥ २ ॥
नमश्च नीलकण्ठाय श्रीकण्ठाय नमोनमः ।
गोपतये शङ्कराय सदा सर्वसहाय च ॥ ३ ॥
पूजाऽन्ते प्रातः सायं वा कृताञ्जलिपुटः स्थितः ।
एकोनविंशनामानि पठतीमानि यो नरः ॥ ४ ॥
स पापैर्मुच्यते सर्वैर्देवदेवैश्च पूज्यते ।
एकस्याप्येषां पठना देहपाते शिवं व्रजेत् ॥ ५ ॥
इत्याह भगवान् रुद्रः पृष्टो गौर्याऽतिभक्तितः ।
लोकानुग्रहबुद्ध्या च पुराणे स्कन्दनामनि ॥ ६ ॥
पञ्चार्थविद्ये निःशेषे निरवद्ये शिवप्रिये ।
भक्तानुग्राहिका देवि ! मातस्तुभ्यं सदा नमः ॥ ७ ॥

## APPENDIX II.

( From षड्दर्शनसमुच्चय of आचार्य हरिभद्र )

### I

अथादौ नैयायिकानां यौगापराभिधानानां लिङ्गादिव्यक्तिरुच्यते । ते च दण्डधराः, प्रौढकौपीनपरिधानाः, कम्बलिकाप्रावृताः, जटाधारिणो, भस्मोद्धूलनपराः, यज्ञोपवीतिनो, जलाधारपात्रकराः, नीरसाहाराः, प्रायो वनवासिनो दोर्मूले तुम्बकं बिभ्राणाः कन्दमूलफलाशिनः, आतिथ्यकर्मनिरताः सस्त्रीकाः, निस्त्रीकास्तेषूत्तमाः । ते च पञ्चाग्निसाधनपराः करे जटादौ च प्राणलिङ्गधराश्चापि भवन्ति । उत्तमां संयमावस्थां प्राप्तास्तु नग्ना भ्रमन्ति । एते प्रातर्दन्तपादादिशौचं विधाय शिवं ध्यायन्तो भस्मनाङ्गं त्रिस्त्रिः स्पृशन्ति । यजमानो वन्दमानः, कृताञ्जलिर्वक्ति " ओं नमः शिवाय " इति । गुरुस्तथैव " शिवाय नमः " इति प्रतिवक्ति । ते च संसद्येवं वदन्ति ।

शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति ।
दासी दासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥

तेषामीश्वरो देवः सर्वज्ञः सृष्टिसंहारादिकृत् । तस्य चाष्टादशावतारा अमी । नकुलीशोऽथ कौशिकः, गार्ग्यः, मैत्र्यः कौरुषः, ईशानः, पारगार्ग्यः, कपिलाण्डः, मनुष्यकः, कुशिकः, अत्रिः, पिङ्गलः, पुष्पकः, बृहदार्यः, अगस्तिः, सन्तानः, राशीकरः, विद्यागुरुश्च । एते तेषां तीर्थेशाः पूजनीयाः । एतेषां पूजाप्रणिधानविधिस्तु तदागमाद्वेदितव्यः । तेषां सर्वतीर्थेषु भरटा एव पूजकाः । देवानां नमस्कारो न सन्मुखैः कार्यः । तेषु ये निर्विकारास्ते स्वमीमांसागतमिदं पद्यं दर्शयन्ति ।

न स्वर्धुनी न फणिनो न कपालदाम
नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रान्यदेव च न किञ्चिदुपास्महे त-
द्रूपं पुराणमुनिशीलितमीश्वरस्य ॥ १ ॥
स एव योगिनां सेव्यो ह्यर्वाचीनस्तु भोगभाक् ।
स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥ २ ॥

उक्तं च तैः स्वयोगशास्त्रे ।

वीतरागं स्मरन्योगी वीतरागत्वमश्नुते ।
सरागं ध्यायतस्तस्य सरागत्वं तु निश्चितम् ॥ ३ ॥

येन येन हि भावेन युज्यते यन्त्रवाहकः ।
तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥ ४ ॥

एतत्सर्वं लिङ्गवेषदेवादिस्वरूपं वैशेषिकमतेऽप्यवसातव्यं, यतो नैयायिकवैशेषिकाणां हि मिथः प्रमाणतत्त्वानां सङ्ख्याभेदे सत्यप्यन्योन्यं तत्त्वानामन्तर्भावनेऽल्पीयानेव भेदो जायते ।

तेनैतेषां प्रायो मततुल्यता । उभयेऽप्येते तपस्विनोऽभिधीयन्ते । ते च शैवादिभेदेन चतुर्धा भवन्ति । तदुक्तम् ।

आधारभस्मकौपीनजटायज्ञोपवीतिनः ।
स्वस्वाचारादिभेदेन चतुर्धा स्युस्तपस्विनः ॥ १ ॥
शैवाः पाशुपताश्चैव महाव्रतधरास्तथा ।
तुर्याः कालमुखा मुख्या भेदा एते तपस्विनाम् ॥ २ ॥

तेषामन्तर्भेदा भरटभक्तलैङ्गिकतापसादयो भवन्ति । भरटादीनां व्रतग्रहणे ब्राह्मणादिवर्णनियमो नास्ति । यस्य तु शिवे भक्तिः स व्रती भरटादिर्भवेत् । परं शास्त्रेषु नैयायिकाः सदा शिवभक्तत्वाच्छैवा इत्युच्यन्ते, वैशेषिकास्तु पाशुपता इति । तेन नैयायिकशासनं शैवमाख्यायते, वैशेषिकदर्शनं च पाशुपतमिति । इदं मया यथाश्रुतं यथादृष्टं चात्राभिदधे । तत्तद्विशेषस्तु तद्ग्रन्थेभ्यो विज्ञेयः ॥

एषां तर्कग्रन्था न्यायसूत्रभाष्यन्यायवार्तिकतात्पर्यटीकातात्पर्यपरिशुद्धिन्यायालङ्कारवृत्तयः क्रमेणाक्षपादवात्स्यायनोद्योतकरवाचस्पतिश्रीउदयनश्रीकण्ठाभयतिलकोपाध्यायविरचिताः ९४००० । भासर्वज्ञप्रणीते न्यायसारेऽष्टादश टीकाः । तासु मुख्या टीका न्यायभूषणाख्या । न्यायकलिका जयन्तरचिता न्यायकुसुमाञ्जलितर्कश्च ।

---

## II

(From सर्वदर्शनसङ्ग्रह)

# अथ नकुलीशपाशुपतदर्शनम् ।

तदेतद्वैष्णवमतं दासत्वादिपदवेदनीयं परतन्त्रदुःखावहत्वान्न दुःखान्तादीप्सितास्पदमित्यरोचयमानाः पारमैश्वर्यं कामयमानाः पराभिमता मुक्ता न भवन्ति परतन्त्रत्वात्, पारमैश्वर्यरहितत्वादस्मदादिवत्, मुक्तात्मानश्च परमेश्वरगुणसम्बन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात्परमेश्वरवदित्याद्यनुमानं प्रमाणं प्रतिपद्यमानाः केचन माहेश्वराः परमपुरुषार्थसाधनपञ्चार्थप्रप-

श्चनपरं पाशुपतशास्त्रमाश्रयन्ते । तत्रेदमादिसूत्रम्, ‘अथातः पशुपतेः पाशुपतयोगविधिं व्याख्यास्यामः’ इति । अस्यार्थः—अत्राथशब्दः पूर्वप्रकृतापेक्षः । पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः । गुरुस्वरूपं गणकारिकायां निरूपितम्—

पञ्चकास्त्वष्ट विज्ञेयाः गणश्चैकस्त्रिकात्मकः ।
वेत्ता नवगणस्यास्य संस्कर्ता गुरुरुच्यते ॥ इति ।
लाभा मला उपायाश्च देशावस्थाविशुद्धयः ।
दीक्षाकारिबलान्यष्टौ पञ्चकास्त्रीणि वृत्तयः ॥ इति ।

तिस्रो वृत्तय इति प्रयोक्तव्ये त्रीणि वृत्तय इति च्छान्दसः प्रयोगः पञ्चमलघूकरणार्थम् । आगमाविरोधिनोऽन्नार्जनोपाया वृत्तयो भैक्ष्योत्सृष्टयथालब्धाभिधा इति । तत्र विधीयमानमुपायफलं लाभः । ज्ञानतपोदेवनित्यत्वस्थितिशुद्धिभेदात्पञ्चविधः । तदाह हरदत्ताचार्यः—

“ज्ञानं तपोऽथ नित्यत्वं स्थितिः शुद्धिश्च पञ्चमम्” इति ।

आत्माश्रितो दुष्टभावो मलः, स मिथ्याज्ञानादिभेदात्पञ्चविधः । तदप्याह ।

मिथ्याज्ञानमधर्मश्च सक्तिर्हेतुश्च्युतिस्तथा ।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः ॥ इति ।

साधकस्य शुद्धिहेतुरुपायो वासचर्यादिभेदात्पञ्चविधः । तदप्याह—

वासचर्या जपो ध्यानं सदारुद्रस्मृतिस्तथा ।
प्रतिपत्तिश्च लाभानामुपायाः पञ्च निश्चिताः ॥ इति ।

येनार्थानुसन्धानपूर्वकं ज्ञानतपोवृद्धी प्राप्नोति स देशो गुरुजनादिः । यदाह—

गुरुर्जनो गुहादेशः श्मशानं रुद्र एव च ॥ इति ।

आलाभप्राप्तेरेकतमादौ यदवस्थानं साऽवस्था व्यक्तादिविशेषेण विशिष्टा ।

तदुक्तम्—

व्यक्ताव्यक्ताजपादानं निष्ठा चैव हि पञ्चमम् ॥ इति ।

मिथ्याज्ञानादीनामत्यन्तव्यपोहो विशुद्धिः । सा प्रतियोगिभेदात्पञ्चविधा । तदुक्तम्—

अज्ञानस्याप्यसङ्गस्य हानिः सङ्गकरस्य च ।
च्युतिर्हानिः पशुत्वस्य शुद्धिः पञ्चविधा स्मृता ॥ इति ।

दीक्षाकारिपञ्चकं चोक्तम्—

द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैव हि पञ्चमः । इति ।

बलपञ्चकं च ।

गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा ।
धर्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतम् ॥ इति ।

शेषमशेषमाकर एवावगन्तव्यम् ।

अत्राथशब्देन दुःखान्तस्य प्रतिपादनम् । आध्यात्मिकादिदुःखव्यपोहप्रश्नार्थत्वात्तस्य पशुशब्देन कार्यस्य परतन्त्रवचनत्वात्तस्य पतिशब्देन कारणस्येश्वरः पतिरीशितेति जगत्कारणीभूतेश्वरवचनत्वात्तस्य। योगविधी तु प्रसिद्धौ । तत्र दुःखान्तो द्विविधः—अनात्मकः सात्मकश्चेति । तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः । सात्मकस्तु दृक्क्रियाशक्तिलक्षणमैश्वर्यम् । यत्र दृक्शक्तिरेकापि विषयभेदात्पञ्चविधोपचर्यते दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । तत्र सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयं ज्ञानं दर्शनम् । अशेषशब्दविषयं सिद्धिज्ञानं श्रवणम् । समस्तचिन्ताविषयं सिद्धिज्ञानं मननम् । निरवशेषशास्त्रविषयं ग्रन्थतोऽर्थतश्च सिद्धिज्ञानं विज्ञानम् । उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्वव्यासदोदितसिद्धिज्ञानं सर्वज्ञत्वम् । इत्येषा धीशक्तिः । क्रियाशक्तिरेकाऽपि त्रिविधोपचर्यते मनोजवित्वं कामरूपित्वं विक्रमणधर्मित्वं चेति । तत्र निरतिशयशीघ्रकारित्वं मनोजवित्वम् । कर्मादिनिरपेक्षस्य स्वेच्छयैवानन्तसलक्षणविलक्षणसरूपकरणाधिष्ठातृत्वं कामरूपित्वम् । उपसंहृतकरणस्यापि निरतिशयैश्वर्यसम्बन्धित्वं विक्रमणधर्मित्वमित्येषा क्रियाशक्तिः । यदस्वतन्त्रं सर्वं कार्यं तत्त्रिविधं विद्या कला पशुश्चेति । तत्र पशुगुणो विद्या । साऽपि द्विविधा—बोधाबोधस्वभावभेदात् । बोधस्वभावा विवेकाविवेकप्रवृत्तिभेदा द्विविधा । तत्र या विवेकप्रवृत्तिः प्रमाणमात्रव्यङ्ग्या ( सा ) चित्तमित्युच्यते । चित्तेन हि सर्वः प्राणी बाह्यार्थात्मकप्रकाशानुगृहीतं सामान्येन विवेचितमविवेचितं चार्थं चेतयत इति । पश्वर्थधर्माधर्मिका पुनरबोधात्मिका विद्या स्वशास्त्रे येनोच्यते । चेतनपरतन्त्रत्वे सत्यचेतना कला । साऽपि द्विविधा—कार्याख्या कारणाख्या चेति । तत्र कार्याख्या दशविधा–पृथिव्यादीनि पञ्च तत्त्वानि, रूपादयः पञ्च गुणाश्चेति । कारणाख्या त्रयोदशविधा—ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम्, अध्यवसायाभिमानसङ्कल्पाभिधवृत्तिभेदाद्बुध्यहङ्कारमनोलक्षणमन्तःकरणत्रयं चेति । पशुत्वसम्बन्धी पशुः । सोऽपि द्विविधः—साञ्जनो निरञ्जनश्चेति । तत्र साञ्जनः शरीरेन्द्रियसम्बन्धी

निरञ्जनस्तु तद्रहितः । तत्प्रपञ्चस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः । समस्तसृष्टिसंहारानुग्रहकारि कारणं तस्यैकस्यापि गुणकर्मभेदापेक्षया विभाग उक्तः पतिः सन्नाद्य इत्यादिना । तत्र पतित्वं निरतिशयदृक्क्रियाशक्तिमत्त्वं, तेनैश्वर्येण नित्यसम्बन्धित्वं सत्त्वं, आद्यत्वमनागन्तुकैश्वर्यसम्बन्धित्वम् । इत्यादर्शकारादिभि स्तीर्थकरैर्निरूपितम् ।

चित्तद्वारेणाऽऽत्मेश्वरसंबन्धो योगः । स च द्विविधः क्रियालक्षणः क्रियोपरमलक्षणश्चेति । तत्र जप्यध्यानादिरूपः क्रियालक्षणः । क्रियोपरमलक्षणस्तु संविद्गत्यादिसंज्ञितः । धर्मार्थसाधकव्यापारो विधिः । स च द्विविधः प्रधानभूतो गुणभूतश्च । तत्र प्रधानभूतः साक्षाद्धर्महेतुश्चर्या । सा द्विविधा व्रतं द्वाराणि चेति । तत्र भस्मस्नानशय्योपहारजपप्रदक्षिणानि व्रतम् । तदुक्तं भगवता नकुलीशेन—'भस्मना त्रिषवणं स्नायीत भस्मनि शयीत' इति । अत्रोपहारो नियमः । स च षडङ्गः। तदुक्तं सूत्रकारेण—'हसितगीतनृत्यहुडुक्कारनमस्कारजप्यषडङ्गोपहारेण उपतिष्ठेत' इति । तत्र हसितं नाम कण्ठोष्ठपुटविस्फूर्जनपुरःसरमहहेत्यट्टहासः । गीतं गान्धर्वशास्त्रसमयानुसारेण महेश्वरसम्बन्धिगुणधर्मादिनिमित्तानां चिन्तनम् । नाट्यमपि नाट्यशास्त्रानुसारेण हस्तपादादीनां सङ्क्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं भावाभावसमेतं च प्रयोक्तव्यम् । हुडुक्कारो नाम जिह्वातालुसंयोगान्निष्पद्यमानः पुण्यो वृषनादसदृशो नादः । हुडुगिति शब्दानुकारो वषडितिवत् । यत्र लौकिका भवन्ति तत्रैतत्सर्वं गूढं प्रयोक्तव्यम् । शिष्टं प्रसिद्धम् । द्वाराणि तु क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि । तत्रासुप्तस्यैव सुप्तलिङ्गवद्दर्शनं क्राथनम् । वाय्वभिभूतस्येव शरीरावयवानां स्पन्दनं कम्पनम् । उपहतपादेन्द्रियस्येव गमनं मन्दनम् । रूपयौवनसंपन्नां कामिनीमवलोक्याऽऽत्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तच्छृङ्गारणम् । कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमवितत्करणम् । व्याहतापार्थकादिशब्दोच्चारणमवितद्भाषणम् । गुणभूतस्तु (विधिः) चर्यानुग्राहकोऽनुस्नानादिभैक्षोच्छिष्टादिनिर्मितायोग्यताप्रत्ययनिवृत्त्यर्थः । तदप्युक्तं सूत्रकारेण—'अनुस्नाननिर्माल्यलिङ्गधारी' इति । तत्र समासो नाम धर्मिमात्राभिधानं, तच्च प्रथमसूत्र एव कृतम् । पञ्चानां पदार्थानां प्रमाणतः प्रपञ्चाभिधानं विस्तरः । स खलु राशीकरभाष्ये द्रष्टव्यः । एतेषां यथासंभवं लक्षणतोऽसङ्करेणाभिधानं विभागः । स तु विहितशास्त्रान्तरेभ्योऽमीषां गुणातिशयेन कथनं विशेषः । तथाहि—

अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः, इह तु पारमैश्वर्यप्राप्तिश्च । अन्यत्राभूत्वा भावि कार्यमिह तु नित्यं पश्वादि । अन्यत्र सापेक्षं कारणमिह तु निरपेक्षो भगवानेव । अन्यत्र कैवल्यादिफलको योगः, इह तु पारमैश्वर्यदुःखान्तफलकः । अन्यत्र पुनरावृत्तिः स्वर्गादि, इह पुनरपुनरावृत्तिरूपः सामीप्यादिफलकः ।

ननु महदेतदिन्द्रजालं यन्निरपेक्षं परमेश्वरकारणमिति । तथात्वे कर्मवैफल्यं सर्वकार्याणां समसमयसमुत्पादश्चेति दोषद्वयं प्रादुःष्यात् । मैवं मन्येथाः । व्यधिकरणत्वात्, यदि निरपेक्षस्य भगवतः कारणत्वं स्यात्तर्हि कर्मणो वैफल्ये किमायातम् ? । प्रयोजनाभाव इति चेत्कस्य प्रयोजनाभावः ? । कर्मवैफल्ये कारणं किं कर्मिणः किंवा भगवतः ? । नाऽऽद्यः । ईश्वरेच्छानुगृहीतस्य कर्मणः सफलत्वोपपत्तेः । तदननुगृहीतस्य ययातिप्रभृतिकर्मवत्कदाचिन्निष्फलत्वसंभवाच्च । न चैतावता कर्मस्वप्रवृत्तिः कर्षकादिवदुपपत्तेः । ईश्वरेच्छायत्तत्वाच्च पशूनां प्रवृत्तेः । नापि द्वितीयः । परमेश्वरस्य पर्याप्तकामत्वेन कर्मसाध्यप्रयोजनापेक्षाया अभावात् । यदुक्तं समसमयसमुत्पाद इति तदप्ययुक्तमचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्या अव्याहतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात् ।

तदुक्तं संप्रदायविद्भिः—

कर्मादिनिरपेक्षस्तु स्वेच्छाचारी यतो ह्ययम् ।
ततः कारणतः शास्त्रे सर्वकारणकारणम् ॥ इति ।

ननु दर्शनान्तरेऽपीश्वरज्ञानान्मोक्षो लभ्यत एवेति कुतोऽस्य विशेष इति चेन्मैवं वादीः । विकल्पानुपपत्तेः । किमीश्वरविषयज्ञानमात्रं निर्वाणकारणं, किं वा साक्षात्कारः, अथवा यथावत्तत्त्वविनिश्चयः ? । नाऽऽद्यः, शास्त्रमन्तरेणापि प्राकृतजनवद्देवानामधिपो महादेव इति ज्ञानोत्पत्तिमात्रेण मोक्षसिद्धौ शास्त्राभ्यासवैफल्यप्रसङ्गात् । नापि द्वितीयः, अनेकमलप्रचयोपचितानां पिशितलोचनानां पशूनां परमेश्वरसाक्षात्कारानुपपत्तेः । तृतीयेऽस्मन्मतापातः पाशुपतशास्त्रमन्तरेण यथावत्तत्त्वविनिश्चयानुपपत्तेः । तदुक्तमाचार्यैः—

ज्ञानमात्रे यथाशास्त्रं साक्षाद्दृष्टिस्तु दुर्लभा ।
पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः ॥ इति ॥

तस्मात्पुरुषार्थकामैः पुरुषधौरेयैः पञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमाश्रयणीयम् ।

इति सर्वदर्शनसङ्ग्रहे नकुलीशपाशुपतदर्शनम् ।

---

# III

(From षड्दर्शनसमुच्चय of राजशेखरसूरि )

## शैवमतम् ।

अथ यौगमतं ब्रूमः शैवमित्यपराभिधम् ।
ते दण्डधारिणः प्रौढकौपीनपरिधायिनः ॥
कम्बलिकाप्रावरणा जटापटलशालिनः ।
भस्मोद्धूलनकर्त्तारो नीरसाहारसेविनः ॥
दोर्मूले तुम्बकभृतः प्रायेण वनवासिनः ।
आतिथ्यकर्मनिरताः कन्दमूलफलाशनाः ॥
सस्त्रीका अथ निस्त्रीका निस्त्रीकास्तेषु चोत्तमाः ।
पञ्चाग्निसाधनपराः प्राणलिङ्गधराः करे ॥
विधाय दन्तपवनं प्रक्षाल्यांहिकराननम् ।
स्पृशन्ति भस्मनाऽङ्गं त्रिस्त्रिः शिवध्यानतत्पराः ॥
यजमानो वन्दमानो वक्ति तेषां कृताञ्जलिः ।
ओं नमः शिवायेत्येवं शिवाय नम इत्यसौ ॥
तेषां च शङ्करो देवः सृष्टिसंहारकारकः ।
तस्यावताराः सारा ये तेऽष्टादश तदर्चिताः ॥
तेषां नामान्यथ ब्रूमो नकुलीशोऽथ कौशिकः ।
गार्ग्यो मैत्र्यः कौरुषश्च ईशानः षष्ठ उच्यते ॥
सप्तमः पारगार्ग्यस्तु कपिलाण्डमनुष्यकौ ।
अपरकुशिकोऽत्रिश्च पिङ्गलाक्षोऽथ पुष्पकः ॥
बृहदाचार्योऽगस्तिश्च सन्तानः षोडशः स्मृतः ।
राशीकरः सप्तदशो विद्यागुरुरथापरः ॥
एतेऽष्टादश तीर्थेशास्तैः सेव्यन्ते पदे पदे ।
पूजनं प्रणिधानं च तेषां ज्ञेयं तदागमात् ॥
अक्षपादो गुरुस्तेषां तेन ते ह्याक्षपादकाः ।
उत्तमां संयमावस्थां प्राप्ता नग्ना भ्रमन्ति ते ॥
प्रमाणानि च चत्वारि प्रत्यक्षं लैङ्गिकं तथा ।
उपमानं च शाब्दं च तत्फलानि पृथक् पृथक् ॥
तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा ।
प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवस्तर्कनिर्णयौ ।

वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥
जातयो निग्रहस्थानान्येषां व्ययस्तु दुस्तरः ।
आत्यन्तिकस्तु दुःखानां वियोगो मोक्ष उच्यते ॥
जयन्ताचार्यरचितो न्यायतर्कोऽतिदुस्तरः ।
अन्यस्तूदयनाचार्यो ग्रन्थप्रासादसूत्रभृत् ॥
भासर्वज्ञो न्यायसारतर्कसूत्रविधायकः ।
न्यायसाराभिधे तर्के टीका अष्टादश स्फुटाः ॥
न्यायभूषणनाम्नी तु टीका तासु प्रसिद्धिभाक् ।
अयमेषां विशेषस्तु यत्प्रजल्पन्ति पर्षदि ॥
शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति ।
दासी दासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥
एतेषु निर्विकारा ये मीमांसां दर्शयन्ति ते ।
तत्र पद्यमिदं चास्ति मोक्षमार्गप्ररूपकम् ॥
न स्वर्धुनी न फणिनो न कपालदाम
नेन्दोः कला न गिरिजा न जटा न भस्म ।
यत्रास्ति नान्यदपि किञ्चिदुपास्महे त-
द्रूपं पुराणमुनिशीलितमीश्वरस्य ॥
स एव योगिनां सेव्यो योऽर्वाचीनस्तु भोगभाक् ।
स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥

उक्तं च तैः स्वयोगशास्त्रे—

वीतरागं स्मरन्योगी वीतरागत्वमश्नुते ।
सरागं ध्यायतः पुंसः सरागत्वं तु निश्चितम् ॥
येन येन हि भावेन युज्यते यन्त्रवाहकः ।
तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥
श्रुतानुसारतः प्रोक्तं नैयायिकमतं मया ।
एतेषामेव शास्त्रेभ्यस्तांस्तान्भावान्विदुर्बुधाः ॥
एतेषां यजमानस्तु सुताराहृदयेश्वरः ।
सत्यवादी हरिश्चन्द्रो रामलक्ष्मणपूर्वजः ॥
भरटानां व्रतादाने वर्णव्यक्तिर्न काचन ।
यस्य पुनः शिवे भक्तिर्व्रती स भरटो भवेत् ॥
अमीषां सर्वतीर्थेषु भरटा एव पूजकाः ।
शेषा नमस्कारकराः सोऽपि कार्यो न सन्मुखः ॥

# APPENDIX IV.

# कारवणमाहात्म्यम् ।

श्रीगणेशाय नमः । श्रीलकुटपाणये नमः ।

अमरगणनिषेव्यः सर्वसिद्धिप्रदाता कलियुगमवतीर्णः कायरूपी महेशः ।
सकलभुवनकर्ता सर्वपापप्रहर्ता दिशतु लकुटपाणिर्वो विभूतिं प्रसन्नः ॥ १ ॥

कैलासशिखरारूढं भगवन्तं त्रिलोचनम् ।
महादेवं महाकालं महाभैरवरूपिणम् ॥
एकाकिनं प्रभुं दृष्ट्वा पप्रच्छ पार्वती तदा ।

श्रीदेव्युवाच—

पट्टबन्धस्य माहात्म्यं विस्तरात्कथय प्रभो ! ।

ईश्वर उवाच—

कलिद्वापरयोर्मध्ये अवतारं मम शृणु ।
यस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥
अत्रिनामा तु देवर्षिः पूर्वं ख्यातो महातपाः ।
तदन्वये प्रसूतोऽसौ विश्वरूपो महाद्विजः ॥
सुदर्शनस्तु देवेशि ! तस्य पत्नी सुदर्शना ।
सर्वलक्षणसंपन्ना रूपलावण्यसंयुता ॥
हर्षगद्गदसंभाषा मत्तमातङ्गगामिनी ।
सम्पूर्णेन्दुमुखी सुभ्रूः कुरङ्गचकितेक्षणा ।
पतिव्रतधरा साध्वी पत्युरादेशकारिणी ॥
यथा रूपं तथा शीलं साध्वीनां धुरि कीर्तिता ।
ब्रह्मरात्र्यवसाने तु प्रथमे च चतुर्युगे ॥
अवतीर्णो ह्यहं मर्त्ये उल्काग्रामे विलोमतः ।
वीरभद्रो गणो नाम····तस्य वरानने ! ॥
तस्य चैकाग्रतो भक्तेरवतीर्णो स्वयं ततः ।
उपपन्नस्ततो गर्भे मासि भाद्रपदे तदा ॥
देवकार्यस्य कार्यार्थं मर्त्यलोके वरानने ! ।
एवं चैवाश्विनो मासस्तथा वै कार्तिको गतः ॥

अथ मार्गशिरोमासस्तथा पौषः प्रकीर्तितः ।
माघमासो गतो देवि ! तथा वै फाल्गुनः स्मृतः ॥
सम्प्राप्ते चैत्रमासे तु शुक्लपक्षे चतुर्दशी ।
अर्धरात्रे व्यतीते तु प्रसूता सा कुलाङ्गना ।
सूतिकास्था महादेवि ! महासत्यवती सती ॥
अपश्यदात्मनो बालं जातमात्रं वरानने ! ॥
पिङ्गाक्षं पिङ्गकेशं च तप्तकाञ्चनसन्निभम् ।
सुदृढं बाहुयुगलं ऊरू च सुदृढौ तथा ॥
परस्परं वदन्त्येवं पश्य बालं गुणान्वितम् ।
विश्वरूपो महाप्राज्ञस्तासां वाक्येन सुन्दरि ! ॥
आमन्त्रयत्ततो विप्रान् वेदवेदाङ्गपारगान् ।
अक्रूरान्सत्यसम्भाषान् सर्वभूतहिते रतान् ॥
एतद्गुणसमायुक्तान् कृत्स्नानामन्त्र्य भक्तितः ।
शुचिर्भूत्वा महादेवि! जातकर्म चकार सः ॥
याज्ञवल्क्यवसिष्ठाभ्यां तथा पाराशरेण च ।
वेदोक्तेनैव कार्येण विधिं कुर्यात्प्रयत्नतः ॥
तर्पयामास तान्विप्रान् दानैश्च विविधैः शुभैः ।
हिरण्यं रजतं वस्त्रं गावो धान्यं च मेदिनी ॥
एवंविधोपचारैश्च पूजिता विविधा द्विजाः ।
दध्यक्षतकुशैर्दूर्वा''कैश्च वरानने ॥
यजेत्प्रजापतिं विध्या वेदानां स्मरणं तथा ।
आशीर्वादं ददुर्विप्रा जीवत्पुत्रो भव द्विज ! ॥
ततः पुत्रमुखं दृष्ट्वा वेदघोषेण पार्वति ! ।
एवं चैत्रोऽथ वैशाखस्तथा ज्येष्ठो वरानने! ॥
आषाढः श्रावणान्ते च ग्रहणं भास्करस्य च ।
ततः श्रुत्वा ब्राह्मणेभ्य इदं वचनमब्रवीत् ॥
सुखासीनौ महादेवि ! दम्पती शयनं गतौ ।
परस्परं वदन्त्येवमालापैर्मधुरस्वरैः ॥
श्रूयते च पुराणेभ्य इदं प्रोक्तं वरानने ! ।
तस्मिन तीर्थे कुरुक्षेत्रे सर्वकामार्थसाधने ॥

यो ददाति विशालाक्षि! यथा शक्त्या तु काञ्चनम् ।
कन्याश्च रजतं वस्त्रं गावो धान्यं च मेदिनीम् ॥
अक्षय्यं तु भवेत्तस्य राहुग्रस्ते दिवाकरे ।
विष्णुना वरदानेन तत्राक्षय्यं प्रकीर्त्तितम् ॥
तेन सन्तः प्रशंसन्ति कुरुक्षेत्रं ततः परम् ।
यदा तत्रैव गन्तव्यं ग्रहणे भास्करस्य तु ॥
उद्धरेच्चाग्निहोत्रं च यावन्नोदयते रविः ।
अस्तं गते दिवानाथे होमं दद्याद्यथाविधि ॥
वैश्वदेवं च मध्याह्ने पञ्चयज्ञं च कारयेत् ।
आगते स्वागतं कुर्यात् आसनं च प्रदापयेत् ॥
भक्तिपूर्वोपदिष्टेन यथाशक्त्या तु भोजनम् ।
स्त्रीबालवृद्धेष्वशनं वासं वाऽतिप्रयत्नतः ॥
स्वागतं न ददात्येवं गृहस्थः पतितो भवेत् ।
प्रतिश्रयस्तु सर्वेभ्यो दातव्यो गृहमेधिना ॥
यतिश्च ब्रह्मचारी च पक्कान्नस्वामिनावुभौ ।
तेषां भक्षा प्रदातव्या यतीनां तु सुसंस्कृता ॥
सुकृतं यत्कृतं किञ्चित् आजन्म मरणान्तकम् ।
अन्यथा हन्ति तत्सर्वं गृहस्थैर्नार्चितो यदि ॥
पूजिते पूजिताः सर्वे मनुष्याः पितृदेवताः ।
तस्मात् सर्वप्रयत्नेन सोऽतिथिसर्गसङ्क्रमः (?) ॥
काले प्राप्तस्त्वकाले वा पथिकोऽतिबुभुक्षितः ।
पूजितो विविधान् भोगान् संदद्यान्नात्र संशयः ॥
आयुः प्रजाश्च वित्तं च ददाति पूजितोऽतिथिः ।
कुपितो हरते सर्वं पुण्यं बृहस्पतेरपि ॥
एतत्सर्वं विशेषेण यथोद्दिष्टं तु पालयेत् ।
पतिव्रता तु या नारी पतिवाक्यानुयायिनी ॥
सा वन्द्या त्रिषु लोकेषु इति शास्त्रस्य निश्चयः ।
मातापित्रोश्च या भक्त्या संयुता व्रतचारिणी ॥
प्रविश्य हृदयं नित्यं देवैरपि हि पूज्यते ।
एवं वाक्यावसाने तु बालं यत्नेन रक्षय ॥

कुमारैः सह वर्तन्तं रममाणं मुदा पथि ।
त्वया बालो विशालाक्षि ! रक्षितव्यः प्रयत्नतः ॥
उत्सङ्गे सा ततः कृत्वा बालं पश्यति सा प्रिया ।
चक्षुर्भ्यामश्रुपूर्णाभ्यां मुखमालोकयत्तदा ॥
स्वजना बांधवा ये च श्यालाः संबन्धिनस्तदा ।
विद्यार्थिनस्तु ये विप्रा ये चान्ये आश्रिता जनाः ॥
कृताञ्जलिः पुरो भूत्वा बालं यत्नेन रक्षत ।
एवं समर्पयन्बालं कुरुक्षेत्रं प्रतस्थिवान् ॥

इति श्रीवायुपुराणे शिवप्रसूतिसर्गः ॥

अतःपरं प्रवक्ष्यामि कुमारचरितं परम् ।
यन्न कस्यचिदाख्यातं तत्सर्वं कथयामि ते ॥
पतिव्रता तु सा नारी पुत्रयुक्ता धनान्विता ।
भर्तृवाक्यानुवर्तन्ती यथोद्दिष्टेन कर्मणा ॥
उषःकाले तु सम्प्राप्ते शुचिर्भूत्वा तु सा प्रिया ।
संमार्ज्य होमशालायां गोमयेनानुलेपयत् ॥
समिधः श्रुवं श्रुचं चैव अक्षतांश्च तथा घृतम् ।
तथा दर्भान्महादेवि ! कृत्वा च धरणीतले ॥
अभ्युक्षणं ततः कृत्वा गता बाह्ये शुभानना ।
होमं ददति ते सर्वे बालाः सम्बन्धिनस्तथा ॥
दिने दिने तु सा देवि ! यथोद्दिष्टं चकार ह ।
तथा चाश्वयुजे मासि सम्प्राप्ते च शुभानने ! ॥
ततोऽन्यस्मिन्दिने देवि ! पूर्वाह्ने शुभकर्मणा ।
आसाद्य तु स्रुवं दर्भान् सघृतं ताम्रभाजनम् ॥
अभ्युक्षणं ततः कृत्वा गता बाह्ये तु सुन्दरि ! ।
ब्राह्मणं च ततो गृह्य गृहं प्राप्ता तपस्विनी ॥
गताग्निहोत्रशालायां सुसमिद्धं हुताशनम् ।
अग्निहोत्रस्य तत्कार्यं होमद्रव्यस्य निकृतिम् ॥
पश्यमाना विशालाक्षी विस्मयाविष्टचेतसा ।
जहर्ष च ततः कृत्वा चित्ते बुद्धिः प्रयोजिता ॥

ब्राह्मणस्तदनुज्ञातो होमं दत्तं च चिन्तयन् ।
गतः स्वमन्दिरमाश्चर्यं पश्यन्ती सा दिने दिने ॥
चिन्तयन्ती परं गुह्यं रहस्यं कौतुकं परम् ।
बालरूपाधिकं ज्ञात्वा सा चिन्तावशमागता ॥
त्यक्तनिद्रा तु सा देवि ! इति चिन्त्य मुहुर्मुहुः ।
ईदृशं कथमाश्चर्यं कस्य नाख्यापयाम्यहम् ॥
होमं ददति पितरो मम कारुण्यबुद्धयः ।
किं देवा ऋषयः सिद्धाः विश्वेदेवास्त्रयोऽग्नयः ॥
होमं दत्वा कथं यान्ति क्षणमात्रेण सर्वदा ।
आश्चर्यं परमं गुह्यं पश्यामि तु दिने दिने ॥
एवं सा चिन्तयित्वा तु ततो निद्रावशमागता ।
प्रभाते पुत्रकं देवि ! अङ्के कृत्वा तपस्विनी ॥
पन्थानमीक्षते नारी उद्विग्नमनसा प्रिये ।
सा पृच्छति पथि क्षीणान् रूक्षकेशांश्च धूसरान् ॥
सपुत्रैः सकलत्रैश्च भ्रातृभिः स्वजनैस्तथा ।
दग्धा वियोगदुःखेन कृष्णदेहाऽभवत्तदा ॥
कांक्षमाणा दिवारात्रौ स्नेहात्तु दर्शनं पतेः ।
चिन्तयन्ती तदा देवि ! नित्यमुद्विग्नचेतसा ॥
कुरुक्षेत्रगतान्देवि ! पथि क्षीणान् समागतान् ।
सङ्घातवर्तिनो दृष्ट्वा दुःखिता सा पतिव्रता ॥
अश्रुपूर्णा सुनेत्रा च चित्राङ्गी मधुरस्वरा ।
गृहे प्राप्ता तु सा देवि ! काङ्क्षन्ती भर्तुरागमम् ॥
अपराह्णे महाभागे ! आगतो मुनिसत्तमः ।
स्नात्वा चासौ कुरुक्षेत्रे पुण्यतीर्थे शुभानने ! ॥
आसनं च तदा देवि ! तया विस्तीर्णमादरात् ।
पादशौचं महादेवि ! कृतं विप्रस्य यत्नतः ॥
दध्यक्षतं तथा दूर्वा सिततोयं सुशोभनम् ।
निक्षिप्य च शुभे पात्रे ततोऽवर्धापयत्पतिम् ॥
बान्धवाः स्वजनाः सर्वे संगिन आश्रिता जनाः ।
कुरुक्षेत्रागतं ज्ञात्वा आगताः स्वागतप्रियाः ॥

तैः सम्भाष्य यथान्यायं हृष्टचित्तोऽभवद्द्विजः ।
इष्टभोज्यं ततः कृत्वा होमं दत्वा वरानने ! ॥
पथि श्रान्तो महादेवि ! ब्राह्मणः शयनं गतः ।
गृहकार्यं ततः कृत्वा संसुप्ते सकले जने ॥
शय्यान्ते चोपविष्टा च प्रिया वचनमब्रवीत् ।
कुशलेनागतो तीर्थे पुण्यक्षेत्रे महामुने ! ॥
दत्त्वा दानं सुपात्रे च क्षेमेणागतो गृहम् ।

ब्राह्मण उवाच—

श्रृणु भद्रे ! प्रवक्ष्यामि गतो तीर्थे यथा प्रिये ! ।
अविघ्नेन च सम्प्राप्तस्तव स्नेहेन सुन्दरि ! ॥
दुर्लभं प्रियमाख्येयं दुर्लभं जीवितं धनम् ।
दुर्लभा त्वादृशी भार्या दुर्लभो गुणवान्सुतः ॥
दुर्लभा जननी लोके पिता चैव विशेषतः ।
दुर्लभं साधुसन्मानं दुर्लभं तीर्थसेवनम् ॥
स्मरामि ते दिवारात्रौ चरितं शोभनं प्रिये ! ।
न स्मरामि विशालाक्षि ! कदाचित्तव विप्रियम् ॥
भार्या नाम नृणां भद्रे ! सर्वकामार्थसाधिनी ॥
यशःश्रियः कामयुक्ता पुत्रदा कुलवर्धिनी ।
भार्याहीनो विशालाक्षि ! कुतो भद्राणि पश्यति ? ॥
कुशलं तव बालस्य कुशलं तव सुन्दरि ! ।
कुशलं धनधान्ये च कुशलं स्वजने जने ॥
अग्निहोत्रं च सातिथ्यं पादशौचं प्रतिश्रयः ।
अशेषं सर्वमित्येतत्त्वया यत्नेन पालितम् ॥

सुदर्शना उवाच—

सातिथ्यमग्निहोत्रं च पादशौचं प्रतिश्रयः ।
यथा सर्वमनुज्ञातं तत्तथा सुदृढं कृतम् ॥

विश्वरूप उवाच—

साधु साधु महाभागे प्रिये सर्वाङ्गसुन्दरि ।
पतिव्रते विशालाक्षि रतिपुत्रप्रवर्धिनि ! ॥
विविधानि च दुःखानि अन्यजन्मकृतानि च ।

त्वद्दर्शनेन नश्यन्ति रविं दृष्ट्वा यथा हिमम् ॥

सुदर्शना उवाच—

अभयं देहि मे कान्त ! रहस्यं कथयामि ते ।
अकथ्यं सर्वलोकानां यन्न वृत्तं कथञ्चन ॥

विश्वरूप उवाच—

अकथ्यं परमं गुह्यं यत्त्वया कौतुकं परम् ।
दृष्टं कथय मेऽशेषं मयि स्नेहेन सुन्दरि ! ॥

श्रीसुदर्शना उवाच—

यत्त्वया समनुज्ञातमग्निहोत्रस्य पालनम् ।
तत्तथा क्रियमाणस्य अहन्यहनि सुव्रतम् ॥
अपरे च दिने होमद्रव्यं श्रुवं श्रुचं तथा ।
अभ्युक्षणं ततः कृत्वा सघृतं ताम्रभाजनम् ॥
अशेषं स्थापयित्वा तु दर्भान् समिध एव च ।
बाह्ये गत्वातिवेगेन पुनरागमनं कृतम् ॥
हुतद्रव्यं च पश्यामि विधियुक्तं दिने दिने ।
एतन्मे कौतुकं कान्त ! रहस्यं कथितं तव ॥

विश्वरूप उवाच—

प्रच्छन्नं तु निरीक्षामि सन्ध्यायां विरते रवौ ।
येन मे संशयो भद्रे ! न कदाचित् प्रवर्तते ॥

ईश्वर उवाच—

अर्धरात्रे व्यतीते तु दम्पती शयनं गतौ ।
ततः प्रभातसमये होमं दत्वा यथाविधि ॥
मध्याह्ने वैश्वदेवं तु कृतमातिथ्यभोजनम् ।
अपराह्णे तु सम्प्राप्ते कृत्वा सम्मार्जनं प्रिये ! ॥
अभ्युक्षणं ततः कृत्वा होमद्रव्यं सुसंस्कृतम् ।
सन्ध्याकाले तु सम्प्राप्तेऽग्निरुद्धृत्य संस्कृतः ॥
पादशौचं ततः कृत्वा श्रोत्रमालोभनं ततः ।
अग्नौ पर्युक्षणं कृत्वा दर्भानास्तीर्य यत्नतः ॥
स्रुवं स्रुचं चाभिषिच्य गवां क्षीरेण पार्वति ! ।
प्राङ्मुखस्तु महादेवि ! ओङ्कारमुच्चरेत्ततः ॥
होमं दत्त्वा स्रुवाग्रेण पश्चात् कुण्डं समालभेत् ।

सुसमिद्धाहुतीर्दत्त्वा यावन्नोदयते रविः ॥
समीपे च गृहं गत्वा उपसृत्य च सुन्दरि ! ।
एकाग्रः प्रयतो भूत्वा मुहुस्तिर्यङ् निरीक्षयन् ॥
पर्यङ्कादुत्थितो बालो प्रेमं दत्त्वा यथा व्रजन् ।
पुनस्तत्रैव गच्छन्तौ दम्पती तदनन्तरम् ॥

इति श्रीशिवपुराणे लकुलीशमाहात्म्ये सन्तोष-
करणं नामाध्यायः ॥

---

ईश्वर उवाच—

ततः प्रभातसमये तथा दृष्ट्वा तु पार्वति ! ।
आहतुस्तौ विशालाक्षं पुत्र! श्रान्तोऽसि को भवान् ? ॥
इति वाक्यावसाने तु मूर्च्छितः पतितो भुवि ।
मूर्च्छितं च सुतं दृष्ट्वा विस्मिता च सुदर्शना ॥
दिशो निरीक्षणं कृत्वा पतिता धरणीतले ।
सप्तमासस्तु देवेशि ! सुतः पञ्चत्वमागतः ॥
अङ्के कृत्वा च तं बालं गता सा जलसन्निधौ ।
देवखाते ततो देवि ! क्षिप्तोऽसौ विपुले जले ॥
नीतोऽसौ कच्छपैर्देवि ! यत्र देवो जलेश्वरः ।
जलमध्ये महालिङ्गं तिष्ठते च वरानने ! ॥
प्रेताञ्जलिं ततो दत्वा हा पुत्र ! त्वं कुतो गतः ? ।
श‍ृणु देवि ! प्रवक्ष्यामि कथां पौराणिकीं शुभाम् ॥
या न कस्यचिदाख्याता रहस्या मुक्तिदायिका ।
स्तम्भयित्वा च तं देहं कृतं संक्रमणं यथा ॥
रोदमानः स विप्रेन्द्रो मूर्च्छितो धरणीं गतः ।
देवह्रदे ह्यहं देवि ! अवगाह्य ततो जलम् ।
क्रीडमानं महादेवि ! कुमारं पश्यते तदा ॥
ब्राह्मणाश्च ततः सर्वे आश्चर्यमिदमब्रुवन् ।
करसन्ताडनं कृत्वा एह्येहि मम पुत्रक ! ॥

ऋषय ऊचुः—

बालस्य चरितं दृष्ट्वा ऋषयो विस्मयान्विताः ।
ब्रूहि त्वं को भवान् ? कस्य ? सत्यधर्मपरायणः ॥

बाल उवाच—

क्षितिजलपवनेभ्यस्तेजसश्चैव देशाद्
उपचितनरवेशः सम्भवो द्रव्यराशिः ।
श्रवणनयनजिह्वाघ्राणसंस्पर्शवेत्ता
क्षितितलपरिवर्ती कोऽप्यहं प्राणधर्मः ॥

ऋषयः ऊचुः—

नमो बालकरूपाय अव्यक्ताय नमोनमः ।
व्योमप्रमाणकायाय कामेशाय नमोनमः ॥
व्योमप्रमाणविद्याय विधेशाय नमोनमः ।
व्योमप्रमाणकालाय कालेशाय नमोनमः ॥
व्योमप्रमाणधर्माय धर्मेशाय नमोनमः ।
व्योमप्रमाणविश्वाय विश्वेशाय नमोनमः ॥
एकवक्त्रद्विवक्त्राय बहुवक्त्राय ते नमः ।
एककण्ठद्विकण्ठाय बहुकण्ठाय ते नमः ॥
एकहस्तद्विहस्ताय बहुहस्ताय ते नमः ।
एकनेत्रद्विनेत्राय बहुनेत्राय ते नमः ॥
नमस्तेऽस्तु महादेव ! नमस्तेऽस्तु महेश्वर ! ।
नमस्तेऽस्तु महारुद्र ! नमस्ते बालरूपिणे ! ॥
नमस्तेऽस्तु महासिद्ध ! देवखातसमुद्भव ! ।
नमस्तेऽस्तु महारुद्र ! नमस्तेऽस्तु सदा हरे ! ॥
अव्यक्ताय नमस्तुभ्यं शाश्वताय च ते नमः ।
एवं स्तवेन देवेशं स्तौति यो लकुडेश्वरम् ॥
स मुक्तः सर्वपापेभ्यो शिवलोके महीयते ।
भोगार्थी लभते भोगान् योगार्थी योगमाप्नुयात् ॥
यं यं चिन्तयते कामं तं तं प्राप्नोति सत्वरम् ।
शिवस्य पदमाप्नोति नित्यं पठति यो नरः ॥

इति श्रीशिवपुराणे लकुलीशमाहात्म्ये तृतीयोऽध्यायः ॥

---

ऋषयः ऊचुः—

यं चारुचामीकरराशिगौरं संस्कारविद्याव्रतमन्त्रधौताः ।
समाविशन्ति प्रतिगृह्यकायं लोकप्रवीराय नमोऽस्तु तस्मै ॥

ईश्वर उवाच—

श्रृणुष्वैकमना भूत्वा कुमारचरितं परम् ।
ततस्तुत्वा परित्यज्य स बालो विश्वरूपिणः ॥
प्राकाशयत्स्वरूपं च दिव्यं त्रैलोक्यमोहनम् ।
त्रिनेत्रं च सुदीप्तं च मुक्तकेशं च सुव्रते ! ॥
धृतयज्ञोपवीतं च मेखलाभस्मसंयुतम् ।
प्रहृष्टमनसस्सर्वे नित्यं प्रोत्फुल्ललोचनम् ॥
ऋग्यजुःसामसम्बन्धैःदिव्याभिस्तुतिसंयुतैः ।
स्तोत्रैर्मनोरमैः स्तुत्वा धावमानं पुनः पुनः ॥
हर्षगद्गदया वाचा संभाव्य तं च बालकम् ।
कृताञ्जलिपुटाः सर्वे स्तुतिं समुपचक्रमुः ॥
संसारभयसंत्रस्ता जरामृत्युभयार्दिताः ।
त्राता त्वं परमेशो नो नान्यस्त्राता विधीयते ॥
आलापैर्मधुरैर्वाक्यैः हर्षेण च वरानने ! ।
साधु साधु महाविप्र ! तव बालस्य ये गुणाः ॥
स्तुत्वा ते गालवादीनां ऋषीणां तत्वदर्शिनाम् ।

विश्वरूप उवाच—

धन्योऽहं सर्व लोकेषु यस्य त्वत्सदृशो सुतः ।
हव्यसर्वप्रसादेन यास्यामो परमां गतिम् ॥

ईश्वर उवाच—

तस्य वाक्यावसाने तु ततोऽहं रूपसंयुतः ।
तत्क्षणाच्च परित्यज्य बालो मार्गेण प्रस्थितः ॥
ततस्ते पृष्ठतः स्थित्वा यथा सुविपुलेन सा ।
धावमाना महादेवि ! बालमायातिमोहिता ॥
स बालः क्षणमात्रेण अदृश्यो जायते भुवि ।
ऊर्वा नाम्ना तु या देवी नदी नाम्ना सरस्वती ॥
भृगुक्षेत्रोपकाराय त्रिषु लोकेषु विश्रुता ।
नदीतीरे गतो बालः क्रीडमानस्तु तिष्ठति ॥
ततः पश्चिममार्गेण श्रीमत्कायावरोहणम् ।
विश्वरूपो महादेवि ! धावमानश्च पृष्ठतः ॥

तस्य मार्गे वर्तमानो बान्धवैः स्वजनैः सह ।
हा पुत्र ! त्वं कथं यासि ? मां त्यक्त्वा विकलेन्द्रियम् ॥
महादानं प्रयच्छन्ति बान्धवा विकलेन्द्रियाः ।
सर्वे विप्रा महादेवि ! क्रन्दमानाः सुदुःखिताः ॥
रात्रौ परिभ्रमन्तस्ते अरण्ये निर्जले वने ।
आलिङ्गन्ति ततो वृक्षान् बाहुभ्यां शोककर्षिताः ॥
केचिन्मार्गं निरीक्षन्ति गुहास्थानानि केचन ।
इतश्चेतश्च देवेशि ! धावमाना द्विजोत्तमाः ॥
वने गुहालतामध्ये वीक्षन्ते ते पुनः पुनः ।
क्रन्दमानैश्च तैः सर्वैरुषःकालस्ततोऽभवत् ॥
एवं प्रभातसमये भानुना दर्शनेन च ।
आश्वासिताश्च ते सर्वे प्रतपन्तः पुनः पुनः ॥
मां दुःखभाजनं त्यक्त्वा अभाग्यं क्षीणमण्डनम् ।
क्व यासि ? वत्स वत्सेति वदन्तः पृष्ठगामिनः ॥
तेषां सुकरुणां वाचं श्रुत्वाहं करुणापरः ।
सम्प्राप्तो वायुवेगेन परं चक्रपुरं प्रति ॥
ब्राह्मणस्तु महादेवि ! मनसा चिन्तयन् स्थितः ।
ततोऽप्यग्नौ महादेवि ! दृष्टो देवो महेश्वरः ॥
ततस्ते प्रस्थिताः सर्वे वेपमानाः सुदुःखिताः ।
माता दृष्ट्वा बालमात्रं महाह्लादिन्युवाच ह ॥
पुत्र ! पुत्रेति जल्पन्ती सुस्वरं करुणं यथा ।

विश्वरूप उवाच—

भाग्यहीनस्य मे वत्स ! दुर्लभं दर्शनं तव ।
निवेदय त्वमात्मानं मूर्च्छितो धरणीं गतः ॥

ईश्वर उवाच—

उद्विग्नमनसो विप्राः वेपमाना मुहुर्मुहुः ।
माता सुदर्शना देवि ! प्रस्खलन्ती पदे पदे ॥
रुदन्ती करुणं चैव स्नेहाद् वै पुत्रवत्सला ।
क्रन्दमाना महादेवि ! दुःखिता सुतदर्शनात् ॥
हा पुत्र ! पुत्र ! पुत्रेति क्रोशन्ती कुररी यथा ।
पाणिभ्यां प्रपदं गत्वा एह्येहि मम पुत्रक ! ॥

हृदयं शोकदावाग्निदग्धं च कुलदीपक ! ।

कुमार उवाच—

मा मा स्पृशन्ति मुनयो मम माता पिता तथा ।
अस्ति कार्यं परं किञ्चित् श्रुण्वन्तु मुनिसत्तमाः ! ॥
त्यज शोकं विशालाक्षि ! न मे माता कदाचन ।
श्रुण्वन्तु ऋषयः सर्वे इतिहासं पुरातनम् ॥
अहं सर्वजगद्व्यापी स्वयं साक्षान्महेश्वरः ।
ऋषीणां वरदानाय उल्काग्रामे महर्षयः ! ॥
प्रकाशाय द्विजातीनां धर्मसंस्थापनाय च ।
अवतीर्णः स्वयं देवि ! तं वेद मां पुरातनम् ॥

ऋषयः ऊचुः—

त्वं देवः सर्वदेवानां कर्ता हर्ता जगत्पतिः ।
भुक्तिमुक्तिप्रदाता त्वं भोगमोक्षमभीप्सितम् ॥
किं पुण्यं के गुणास्तस्य येन देवि ! प्रशंससि ।
उल्काग्रामस्य माहात्म्यमशेषं कथय प्रभो ! ॥

ईश्वर उवाच—

श्रृण्वन्तु ऋषयः सर्वे मम भक्तिपरायणाः ।
अग्निहोत्ररता नित्यं वेदाध्ययनतत्पराः ॥
उल्काग्रामं शिवक्षेत्रं सप्त मन्वन्तराणि च ।
कामिकं तं विजानीयुर्नात्र कार्या विचारणा ॥
स्नानं कुर्वन्ति ये गत्वा पुण्ये भागीरथीजले ।
उल्काग्रामे तु तत्पुण्यं स्थावरालोकनेन तु ॥
तस्मिन् तीर्थे मदीये तु सुकृतं येन यत्कृतम् ।
तस्य वर्षसहस्रं तु प्रतिजन्म तदक्षयम् ॥
परित्यजति यः प्राणानुल्काग्रामे महामतिः ।
दिव्यं वर्षसहस्रं तु स रुद्रस्य पदे भवेत् ।
अनशनेन यः कश्चित् प्राणत्यागं करोति चेत् ।
अनिवर्तिका गतिस्तस्य रुद्रलोके महीयते ॥
ब्राह्मणान् भोजयेत्तत्र तापसान्वा यतींस्तथा ।
सर्वं कोटिगुणं तस्य इति स्वायंभुवोऽब्रवीत् ॥

देवखाते च यः स्नात्वा पिण्डान् दद्याद्यथाविधि ।
अहोरात्रोषितो भूत्वा पितॄणां दत्तमक्षयम् ॥
चैत्रमासे तथाष्टम्यां अहोरात्रोषितो नरः ।
देवह्रदतटे रम्ये ब्राह्मणान् भोजयेत्ततः ॥
सुवर्णं रजतं वस्त्रं गावो धान्यं च मेदिनी ।
पिण्डं दद्याद्यथान्यायं मन्त्रैश्च वैदिकैः शुभैः ॥
केदारश्च प्रयागश्च कुरुक्षेत्रं गया तथा ।
देवऱ्हदस्य सान्निध्यं कलां नार्हन्ति षोडशीम् ॥
अवतीर्णो ह्यहं यत्र किं तत्र गुणकीर्तना ।
अवतीर्णाः सुराः सर्वे सचन्द्राः सदिवाकराः ॥
अन्ये च ऋषयः सर्वे सशैलवनकाननाः ।
गंगा सरस्वती तापी यमुना चैव नर्मदा
मन्दाकिनी च सरयूः तथा च वेदका नदी ॥
देवऱ्हदस्य सान्निध्ये नात्र कार्या विचारणा ॥
लभन्ते परमं ज्ञानं ये चान्ये शिवयोगिनः ।
एतद्धि बालचरितं तीर्थं चापि सुशोभनम् ॥
कामदं सर्वजंतूनां नात्र कार्या विचारणा ।
तथापि न त्यजेन्माता न भ्राता न च सोदराः ॥
अश्रुपूर्णैश्च नयनैः धावमानाश्च पृष्ठतः ॥

श्रीविश्वरूप उवाच—

प्रसादस्तु त्वया कार्यः मम मूढस्य सर्वतः ।
त्वद्दर्शनेन पूतोऽहं इहलोके परत्र च ॥
आलोकय त्वं मां वत्स ! पतितं शोकसागरे ।
विवर्णवदना माता प्रस्खलन्ती पदे पदे ॥
त्रायस्व जननीं वत्स ! वर्षयोगेन दुःखिताम् ।
न मातृसदृशं तीर्थं त्रैलोक्ये सचराचरे ॥

ईश्वर उवाच—

वार्यमाणौ समीपस्थौ मया माता पिता तथा ।
मोहितौ विष्णुमायाभिर्नाजानीतां महेश्वरम् ॥
तत्रस्थानात्समायातः श्रीमत्कायावरोहणम् ।

अष्टवर्षकलारूपी ईशानो भृगुमण्डले ॥
भृगोरनुग्रहार्थाय अवतीर्णः कृते युगे ।
ब्रह्मरात्र्यवसाने तु आदिकल्पे महेश्वरि ! ॥
ईशानश्चोत्तरेशाने भालाक्षो देवतागणैः ।
पृष्ठभागे पुनर्दृष्ट्वा जननीजनकादयः ॥
ततो मया धृतः कोणः भृकुटीकुटिलाननम् ।
ततो मे भृकुटीं दृष्ट्वा स ऋषिर्दीनमानसः ॥
विचेतनः पुनर्जातः पुनराश्वासितो मया ।
अत्रैव स्थीयतां ब्रह्मन् ! आवयोः संगकारणम् ॥
मया तु दण्डकाष्ठेन नदीनामा तु जाह्नवी ।
आनीता जाह्नवी पुण्या पुण्यतोयावगाहिता ॥
सर्वतीर्थमयी पुण्या देवखातेषु दुर्लभा ।
दीर्घा रेखा कृता यस्मात् तेनेयं दीर्घिका स्मृता ॥
दुर्लभा सर्वलोकेषु अमायात्रा विशेषतः ।
द्वापरस्य युगस्यादौ मेघनन्दो महेश्वरः ॥
यत्र सिद्धो महामेघो यत्र सिद्धो महेश्वरि ! ।
आश्रयं देहि मे देव ! दिनानि कतिचित्पुरा ॥
यास्यामि स्वगृहस्थानं नात्र कार्या विचारणा ।
ततो मद्वचनं श्रुत्वा वृद्धदेवोऽब्रवीदिदम् ॥
ममैतत्संकटस्थानं कथं तर्ह्यावयोर्भवेत् ।
स उवाच पुनर्देव ! आतिथ्यं क्रियतां मम ॥
आतिथ्ये ये गुणाः प्रोक्तास्ते सर्वे त्वयि संस्थिताः ।
आश्रयस्य प्रसादेन महत्पुण्यफलं लभेत् ॥
गृहस्थस्य परो धर्मो ह्याश्रयः पादशौचनम् ।
आसनं चार्घ्यदानं च तस्मात्कर्तव्यमुत्तमम् ॥
इति प्रबोधितो देवि ! न दद्यादाश्रयं मम ।

वृद्धदेव उवाच—

ब्रह्मतीर्थेषु तिष्ठस्व ब्रह्मेश्वरस्य सन्निधौ ।
भृगुक्षेत्रं पवित्रकृतं भक्तानां मोक्षकाम्यया ॥

श्रीमहादेव उवाच—

वृद्धस्य वचनं श्रुत्वा लकुलीशो वरानने ! ।
ब्रह्मेश्वरं समासाद्य तस्मिन्नेव लयं गतः ॥
स्थितः स भगवान् तत्र कायरूपी महेश्वरः ।
येन कायावतारोऽसौ तेनेदं कायरोहणम् ॥
असिदण्डधरो वामे दक्षिणे बीजपूरकम् ।
ब्रह्मलिङ्गे महादेवि ! अहमपि लयं गतः ॥
कायावरोहणे पुण्ये तीर्थे तीर्थवरोत्तमे ! ।
भृगुक्षेत्रपवित्रार्थमवतीर्णो युगे युगे ॥
आदिकल्पावसाने तु ब्रह्मकल्पे पुरातने ।
ब्रह्मणो मनसः पुत्रो अत्रिनामा च विश्रुतः ॥
अत्रिस्तु जनयामास आत्रेयं नाम नामतः ।
आत्रेयादग्निशर्मोपि अग्निशर्मसुतः शुचिः ॥
सोमशर्मेति विख्यातो धर्मशीलो जितेन्द्रियः ।
सोमशर्मसुतो जातो विश्वरूपो द्विजोत्तमः ॥
विश्वरूपादहं जातो बालरूपधरो हरः ।
येन व्याप्तं जगत्सर्वं त्रैलोक्यं सचराचरम् ॥
जगत्प्राणस्वरूपोऽहं जन्तूनां जीवलक्षणम् ।
योगिनां परमं ब्रह्म ब्रह्मणा परिकीर्तितम् ॥
तन्मां विद्धि महादेवि ! विश्वरूपं जगद्गुरुम् ।
चराचरेषु विख्यातं देहिनां देहमाश्रितम् ॥
समानो नाम यो वायुर्भूतानां विषयात्मवान् ।
तत्रोत्पन्नश्च तत्रैव मया संक्रमणं कृतम् ॥
लम्बकस्तु समानस्याव्यापकस्तु व्यवस्थितः ।
आत्मरूपसमानस्य प्राणिनां परमः शिवः ॥
अवतीर्णस्ततो मर्त्ये कायरूपधरो हरः ।
कायावतारे लोकेशो लोकानां हितकाम्यया ॥

ईश्वर उवाच—

ईशानः प्रथमे जातो द्वितीये तु महाबलः ।
तृतीये तु युगे जातो वृद्धदेवो महेश्वरः ॥

प्राप्ते कलियुगे घोरे धर्मसंस्थापनाय च ।
सर्वपापहरं पुण्यं श्रीमत्कायावरोहणम् ॥
कोटिलिङ्गस्य संस्थानं शिवक्षेत्रेण निर्मितम् ।
सर्वं तीर्थमिदं देवि ! विख्यातं भृगुमण्डले ॥
श्रीमत्कारवणे तीर्थे मूर्तिमान् शङ्करः स्वयम् ।
चातुर्युगमिदं तीर्थं शिवशक्त्या समन्वितम् ॥
भृगुक्षेत्रपवित्रार्थं निर्मितं शम्भुना स्वयम् ।
कृते इच्छापुरी नाम त्रेतायां च मयापुरी ॥
द्वापरे मेघवती नाम कलौ कायावरोहणम् ।
श्रीमातेति कृते प्रोक्ता त्रेतायां भूलम्बा मता ॥
आदौ चान्ते महादेवि ! मूर्तिमन्तो महेश्वरौ ।
लिङ्गमूर्त्तौ द्वयोर्मध्ये स्वयं साक्षाद्युगेश्वरः ॥
ईशानं कृत्तिकानाथं सानन्दं लकुलीश्वरम् ।
पश्यन्ति ये नरा नित्यं ते नरा गतकल्मषाः ॥
ईशानं प्रवरं तीर्थं ईशानो यत्र तिष्ठति ।
प्रवरः सर्वदेवानां सर्वपापोपशान्तिदः ॥
ईशानः सर्वतन्त्रेषु सर्वतन्त्रेषु नायकः ।
ईशानः सर्वदेवश्च तस्मादीशानो वै प्रभुः ॥
तमीशानं समासाद्य विधिना श्रद्धया सह ।
शिवोक्तेन च मन्त्रेण पूजयित्वा जगद्गुरुम् ॥
प्रदक्षिणं ततः कृत्वा पूजयित्वा महेश्वरम् ।
प्राप्नोति परमं स्थानं भुक्तिमुक्तिफलप्रदम् ॥
महाबलं ततस्तीर्थं यत्र तप्तं तपः पुरा ।
ऋषिभिर्देवमुख्यैश्च परं मोक्षमभीप्सुभिः ॥
पुरा त्रेतायुगे देवि ! तीर्थे तीर्थवरोत्तमे ।
सालंकाय(?)पौत्रेण नन्दिना भावितात्मना ।
आराध्य तपसा तेन दिव्यं वर्षसहस्रकम् ।
ध्यानयुक्तः सदा तिष्ठन् जपन्निन्द्रियनिग्रहः ॥
एकचित्तश्च शान्तात्मा मम वाक्यपरायणः ।
तोषितोऽहं तदा देवि ! वरमस्मै प्रदत्तवान् ॥

त्रिनेत्रः शूलपाणिश्च मम रूपस्वरूपधृक् ।
सप्तर्षिभिश्च भानुना परमार्थविशारदैः ॥
प्राप्ता तैः परमा सिद्धिरक्षया लोकदुर्लभा ।
अन्यैश्च बहुभिः सिद्धैस्तपसा पुष्कलेन च ॥
अपरे तु युगे प्राप्ते वृद्धदेवो महोदयः ।
यत्र सिद्धो महामेधाः स्वयं देवो महेश्वरः ॥
अस्य दर्शनमात्रेण मुच्यते सर्वपातकैः ।
क्षेत्राधिपं तु तं विद्धि स्वयं तत्र व्यवस्थितः ॥
घोरे कलियुगे प्राप्ते देवदेवो जगद्गुरुः ।
लकुलीश इति ख्यातः त्रिषु लोकेषु विश्रुतः ॥
तत्रस्थजीवलोकानां मुक्त्यर्थं नैव संशयः ।
ज्ञानमूर्तिः स्वयं साक्षाद् देवदेवो भवोद्भवः ॥
आत्मस्थं चिन्तय ज्ञानं वीतरागं च केवलम् ।
तत्तीर्थं लाकुलं ज्ञेयं शिवक्षेत्रमुदाहृतम् ॥
सेव्यते दैवतैः सर्वैः ऋषिभिश्च तपोधनैः ।
तपसा साधितस्तैस्तु सुरैर्ब्रह्मादिभिः प्रिये ! ॥
ईप्सितं प्राप्तवान् कार्यमस्मिन् तीर्थे वरानने ! ।
तत्र स्नात्वा च दत्वा च पितॄणां तु तिलोदकम् ॥
मुच्यते मानवः पापात् सप्तजन्मसमुद्भवात् ।
सन्देहो नैव कर्तव्य इति शम्भुः स्वयमब्रवीत् ॥
प्रयागे वा भवेन्मोक्षो महाकाले च वा प्रिये ! ।
अमरकण्टके तद्वत् तथा कायावरोहणे ॥
महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ।
अनघः स्नानमात्रेण स भूत्वेह द्विजोत्तमः ॥
अस्मिन्योगे त्वशक्तोऽपि स्नायादत्र दिनत्रयम् ।
पतित्वा ब्राह्मणस्तत्र ब्रह्महा चात्महा भवेत् ॥
मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ।
आश्विनस्य सिते पक्षे चतुर्दश्यामुपोषितः ॥
देवेभ्यश्च पितृभ्यश्च कृत्वा श्राद्धादिकाः क्रियाः ।
अश्विन्याश्च सोमयोगे ये कुर्वन्ति नरोत्तमाः ॥

पट्टबन्धं लाकुलीशं स्वयं देवैश्च यत्कृतम् ।
न तेषां जायते जन्म संसारे दुःखसंकटे ॥
तत्र मारी न वर्तेत न दारिद्र्यं न रोगिणः ।
श्रूयतामत्र देवेशि ! पुण्येऽस्मिन् भृगुमण्डले ॥
श्रीमत्कारोहणे तीर्थे प्रथमं तु कलौ युगे ।
दीर्घकायं तु देवेशि! यज्ञं यज्ञवरोत्तमे ॥
कृत्वा तु ब्राह्मणान् पूज्य दिनान्यष्टादशैव तु ।
तत्र कारोहणे द्वारे विश्वे देवा महर्षयः ॥
भोजयेयुर्ब्राह्मणान् शक्त्या यजमानः पितामहम् ।
यो वेद विश्वमद्रूपं स्वयं विष्णुमहेश्वरम् ॥
ब्राह्मणः श्रद्धया युक्तो ब्रह्मेश्वरो ह्यजायत ।
अजैकपादा गन्धर्वा किन्नराश्च तथैव च ॥
सर्वे देवाश्च पितरः सचन्द्रार्कदिवाकराः ।
मरीचिरंगिरा अत्रिः पुलस्त्यः पुलहस्तथा ॥
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च ।
देवलो गालवश्चैव वामदेवो महाऋषिः ॥
वालखिल्यश्च कुशश्च तृणबिन्दुस्तथैव च ।
उद्दालको जयच्छृंगो माण्डव्यो व्यासनन्दनः ॥
गौतमोऽथ भरद्वाजो वात्सो वात्स्यायनस्तथा ।
अन्ये च बहवो देवि! ऋषयश्च तपोधनाः ॥
दृष्ट्वा देवं विरूपाक्षं आनन्दं परमं ययुः ।
यानि कानि च पुण्यानि तीर्थानि सरितस्तथा ॥
ब्रह्माद्याः सर्वतीर्थेषु स्नात्वा चैव मुदान्विताः ।
स्नापयेयुः शिवं तत्र पुण्यैस्तीर्थोदकैः प्रिये ! ॥
प्रथमं स्नापयेद्ब्रह्मा ततश्चैव जनार्दनः ।
ततस्त्विन्द्रोऽपि देवेशः चतुर्थो भानुरेव च ॥
चतुर्भिः कलशैर्दिव्यैः स्नाप्य देवं जगद्गुरुम् ।
विलेप्य चन्दनैर्दिव्यैः कर्पूरागरुधूपकैः ॥
पुष्पैर्मनोहरैर्दिव्यैः श्वेतमालाभिरर्चितः ॥
पट्टसूत्रमयैर्वस्त्रैः सूत्रजैर्वा महेश्वरम् ।
परिधाप्य महादेवं यथाशक्त्या च पूजयेत् ॥

यावत्तद्वस्त्रतन्तूनां संख्यानं शिवपूजने ।
तावद्युगसहस्राणि शिवलोके महीयते ॥
ते पूज्य विधिना देवं सुरा ब्रह्मादयः प्रिये ! ।
हिरण्मयं ततः पट्टं चक्रुर्देवस्य मूर्धनि ॥
पट्टबन्धं तु ये कुर्युरेवं देवस्य मूर्धनि ।
न तेषां पुनरावृत्तिः संसारे जायते प्रिये ! ॥

श्रीदेव्युवाच—

किं पुण्यं के गुणास्तस्य किमर्थं कीर्तितं विभो ! ।
पट्टबन्धस्य माहात्म्यं श्रोतुमिच्छामि शङ्कर ! ॥

श्रीशङ्कर उवाच—

सागरस्य तटे रम्ये प्रभासो नाम सुन्दरि ! ।
सर्वं तीर्थं प्रभासादि नात्र कार्या विचारणा ॥
तत्र सोमेश्वरो देवो सोमेन स्थापितः पुरा ।
तस्य द्वादशमात्राभिः समानं पट्टबन्धनम् ॥
सकलैश्चैव योगैश्च प्रभासे यत्प्रकीर्तितम् ।
तत्फलं समवाप्नोति पट्टबन्धं करोति यः ॥
कार्तिके कृत्तिकायोगे कार्तिक्यां षण्मुखस्य च ।
दर्शनात्सप्तयात्रायां तत्फलं नात्र संशयः ॥
अयनेऽमरचण्डीशे यात्रायां पञ्चभिः फलम् ।
तत्फलं कृतमात्रेण ( नरः प्राप्नोति ) पार्वति ! ॥
वैशाख्यां महाकाले अद्य एकादशीफलम् ।
दर्शनेनापि चाश्विन्यामित्याहुश्च पुराविदः ॥
यत्फलं च कुरुक्षेत्रे राहुणा ग्रसिते रवौ ।
आजन्मगामिनां नृणां तत्फलं पट्टबन्धने ॥
सोमवारे त्वमावास्यां भस्मगात्रस्य दर्शनात् ।
यात्राणां दशके यच्च तत्फलं पट्टबन्धनात् ॥
वाराणस्यां महादेवि ! कालक्षेपं करोति यः ।
तत्फलं समवाप्नोति सकृद्वै पट्टबन्धनात् ॥
गङ्गायां साधयेत् पुण्यं चतुर्युगेन यन्नरः ।
तत्पुण्यं जायते तस्य पट्टबन्धं करोति यः ॥

गङ्गायां सरिति पुंसामाजन्म सेवनात्फलम् ।
ना····नैमिषादीनां तत्फलं पट्टबन्धनात् ॥
सरस्वत्यां कुरुक्षेत्रे कनखले········ ।
यत्पुण्यं हेमदानेन तत्फलं पट्टबन्धनात् ॥
केदारे सप्तयात्रायां यत्फलं लभते नरः ।
तत्फलं समवाप्नोति सकृद्वै पट्टबन्धनात् ॥
कापिलं गोसहस्रं तु यो ददाति दिने दिने ।
तत्फलं समवाप्नोति पट्टबन्धं करोति यः ॥
कृष्णाजिनसहस्राणि तिलधेनुशतानि च ।
दत्वा तत्फलमाप्नोति पट्टबन्धे कृते सति ॥
मतङ्गजसहस्रं तु अश्वानामयुतं तथा ।
तत्फलं समवाप्नोति पट्टबन्धे कृते सति ॥
ससागरां धरां दत्वा पुमान्यत्फलमश्नुते ।
तत्फलं समवाप्नोति पट्टबन्धे कृते सति ॥
कन्याकोटिप्रदानेन यत्फलं कविभिः कृतम् ।
विधिना पट्टबन्धे तु तत्फलं लभते नरः ॥
वापीकूपसहस्राणि देवतायतनानि च ।
कृत्वा यत्फलमाप्नोति तत्फलं पट्टबन्धनात् ॥
मातापित्रोर्गुरूणां च भक्ति····तो नृणाम् ।
तत्फलं समवाप्नोति सकृद्वै पट्टबन्धनात ॥
गवामर्थे द्विजार्थे च स्वाम्यर्थे यस्त्यजेत्तनुम् ।
तत्फलं समवाप्नोति पट्टबन्धेन पार्वति ! ॥
आपन्नार्तिहराणां च तीर्थसेवाजितात्मनाम् ।
सत्यव्रतानां यत्पुण्यं तत्फलं पट्टबन्धनात् ॥
वनाश्रमेषु वसतां तापसानां च यत्फलम् ।
तत्फलं जायते तस्य पट्टबन्धं करोति यः ॥
यस्तु वर्षशतं पूर्णमहोरात्रमुपासते ।
एकेन पट्टबन्धेन तत्फलं लभते नरः ॥
गाङ्गेयं नार्मदं चान्द्रं पुण्यं सारस्वतं जलम् ।
करोति पार्वति ! नित्यं तत्फलं पट्टबन्धनात् ॥

यानि कानि च तीर्थानि पुण्यान्यायतनानि च ।
भूतलं सर्वमटते तत्फलं पट्टबन्धनात् ॥
दुर्लभं जन्म विप्रस्य दुर्लभं च तथा धनम् ।
दुर्लभः पट्टबन्धश्च लकुलीशस्य च प्रिये ! ॥
स्वल्पेन हेम्ना लकुलीश्वरस्य यः पट्टबन्धं विधिवत्करोति ।
विधूतपापो हि विमोदते स प्रसादमासाद्य महेश्वरस्य ॥
य इदं लकुलीशस्य माहात्म्यं शृणुयान्नरः ।
तत्प्रसादेन तस्यास्तु गोसहस्रादिकं फलम् ॥
इति प्रपन्नाः लकुलीशमीशं ये चारुचामीकरराशिगौरम् ।
संस्कारविद्याव्रतमन्त्रधौतं समाविशन्ति प्रतिगृह्यकायम् ॥ *

इति श्रीशिवपुराणे पार्वतीमहेश्वरसंवादे तीर्थ···णिकायां
शूलपाणिजन्मपट्टबन्धादिमाहात्म्यं समाप्तम् ।

समाप्तं कारवणमाहात्म्यम् ।

---

* It may be noted here that the Ms. of "Kāravaṇa Māhātmya", the text of which is here printed, is very corrupt and full of mistakes.—J. S. K.

## "GAEKWAD'S ORIENTAL SERIES."

### ALREADY OUT.

| No. | Title | Rs. a. p. |
|---|---|---|
| 1. | Kâvyamîmânsâ by Râjaśekhara ... ... ... ... ... | 2- 0- 0 |
| 2. | Naranârâyaṇânanda by Vastupâla ... ... ... ... ... | 1- 4- 0 |
| 3. | Tarkasangraha by Ânandajñâna ... ... ... ... ... | 2- 0- 0 |
| 4. | Pârthaparâkrama by Prahlâdanadeva... ... ... ... ... | 0- 6- 0 |
| 5. | Râshtraudhavanśa Mahâkâvya by Rudrakavi ... ... ... | 1-12- 0 |
| 6. | Lingânuśâsana by Vâmana ... ... ... ... ... ... | 0- 8- 0 |
| 7. | Vasantavilâsa by Bâlachandrasûri ... ... ... ... ... | 1- 8- 0 |
| 8. | Rupakashatka by Vatsarâja ... ... ... ... ... ... | 2- 4- 0 |
| 9. | Mohaparâjaya by Yaśahpâla ... ... ... ... ... ... | 2- 0- 0 |
| 10. | Hammîramadamardana by Jayasinhasûri ... ... ... ... | 2- 0- 0 |
| 11. | Udayasundarîkathâ by Soddhala ... ... ... ... ... | 2- 4- 0 |
| 12. | Mahâvidyâvidambana by Bhattavâdîndra, with commentary of Bhuvanasundarasûri ... ... ... ... ... ... ... | 2- 8- 0 |
| 13. | Prâchînagurjarakâvyasangraha-Part I. ... ... ... ... | 2- 4- 0 |
| 14. | Kumârapâlapratibodha by Somaprabhâchârya ... ... ... | 7- 8- 0 |
| 15. | Gaṇakârikâ by Bhâsarvajña with Kâravaṇamâhâtmya (a work on the Pâśupata system of worship) ... ... ... ... | 1- 4- 0 |
| *16. | Sangîtamakaranda by Nârada.... ... ... ... ... ... | |
| *17. | Panchamîkahâ by Dhanapâla (Apabhraṃśa) | |
| *18. | Lekhapanchâśikâ | |

### IN THE PRESS.

1. Tattvasangraha of Sântarakshita with commentary by Kamalaśîla
2. Paraśurâmakalpasûtra with commentary by Râmeśvara and Paddhati by Umânanda.
3. Nyâvapraveśa of Dinnâga with commentary by Haribhadrasûri and Panjikâ by Pârśvadeva.
4. Siddhântasâ[illegible] by Jagannâtha (Sanskrit from the Arabic "Almagist," Ptolemy's work on Astronomy).
5. Vârâhaśrautasutras.
6. Samarângaṇa by Bhoja (a work on Indian Architecture).

### IN PREPARATION.

1. A Descriptive Catalogue of the palm-leaf manuscripts in the Bhandar at Jesalmere.
2. A Descriptive Catalogue of all the 658 palm-leaf manuscripts and important paper manuscripts in the Bhandars at Patan.
3. A Descriptive Catalogue of the manuscripts in the Central Library, Baroda.
4. Abhilashitârthachintâmaṇi by Someśvaradeva.

### UNDERTAKEN.

1. Aparâjitapr[illegible] (A work on Indian Architecture).
2. Katara (Translation into Sanskrit of an Arabic work,) by Nayanasukhopâdhyâya.
3. Sangîtaratnâvali by Somarâjapratîhâra.
4. Mânavakalpasûtras with commentary by Jaradgava.
5. Âsvalâyanaśrautasûtras with commentary by Devatrâta.
6. Âpastambaśrautasûtras with commentaries by Dhûrtaswâmin and Kapardî.
7. Bodhâyanaśrautasûtras with commentary by Bhavaswâmin.
8. Hiraṇyakeśîyaśrautasûtras with commentary by Matrdatta.
9. Jaiminiyaśrautasûtras with commentary by Bhavatrâta.
10. Srautapaddhati, by Tâlavrintanivâsin.
11. Samrât Siddhânta by Jagannâtha.

---

* Will be out shortly.

N. B.—The above books can be had from the Central Library, Baroda.